## अथधर्मप्रवृत्त्यनुक्रमः

॥ श्रीवेदव्यासायनमः ॥ श्रीगुरुभ्योनमः ॥ नत्वासर्वेश्वरंविष्णुंगोविंदंपितरंतथा॥ आन्हिकादिसमारभ्यलिख्यतेधर्मसंग्रहः ॥ १
तत्रादौ ॥ उषःकालेसमुत्थायचिंतयेदात्मनोहितम् ॥ स्मृत्वानारायणंदेवंस्तोत्राण्यपिचसंजपेत् ॥ ब्राह्मेमुहूर्तेचोत्थायधर्माधर्मौवि-
चिंतयेत् ॥ कायक्लेशविनाशार्थंध्यायंतिपरमेश्वरं ॥ स्मृतिचंद्रिकायाम् ॥ ब्राह्मेमुहूर्तेयानिद्रासापुण्यक्षयकारिणी ॥ तांकरोतितुयो
मोहात्पादकृच्छ्रेणशुध्यति ॥ अथमौनविधिः ॥ प्रभातेमैथुनेचैवप्रस्रावेदंतधावने ॥ स्नानेभोजनकालेचषट्सुमौनंविधीयते ॥ उत्थाय
पश्चिमेयामेरात्रेराचम्यचोदकं ॥ अंतर्धायतृणैर्भूमिंशिरःप्रावृत्यवाससा ॥ वाचंनियम्ययत्नेननिष्ठीवोच्छ्वासवर्जितः ॥ कुर्यान्मूत्र
पुरीषेतुशुचौदेशेसमाहितः ॥ इतियाज्ञवल्क्यः ॥ दशहस्तंपरित्यज्यमूत्रंकुर्याज्जलाशये ॥ शतहस्तंपुरीषेतुनदीतीरेचतुर्गुणं ॥ वसिष्ठः ॥
मूत्रेतुदक्षिणेकर्णेपुरीषेवामकर्णके ॥ धारयेद्ब्रह्मसूत्रंतुमैथुनेचोपवीतवत् ॥ दिवासंध्यासुकर्णस्थब्रह्मसूत्रउदङ्मुखः ॥ कुर्यान्मूत्रपुरीषेतु
रात्रौचेद्दक्षिणामुखः ॥ कर्णश्चदक्षिणः ॥ पवित्रंदक्षिणेकर्णेकृत्वाविण्मूत्रमुत्सृजेत् ॥ इतिस्मृत्यंतरे ॥ अंगिराः ॥ कृत्वायज्ञोपवीतंतुपृष्ठतः
कंठलंबितं ॥ विण्मूत्रंतुगृहीकुर्याद्यद्वाकर्णेसमाहितः ॥ प्रत्यङ्मुखस्तुपूर्वाण्हेपराण्हेप्राङ्मुखस्तथा ॥ उदङ्मुखस्तुमध्यान्हेनिशायां
दक्षिणामुखइति ॥ सूर्यसोमौनवीक्षणीयाइत्याशयेनाहयमः ॥ सायणीये ॥ गृहीत्वाजलपात्रंतुविण्मूत्रंकुरुतेयदि ॥ तज्जलंमूत्रसदृशं
पीत्वाचांद्रायणंचरेत् ॥ तीर्थशौचंनकुर्वीतकुर्वीतोद्धृतवारिणेतिमनुः ॥ जलेविण्मूत्रगंडूषान्येकुर्वंतिनराधमाः ॥ आब्रह्मकल्पपर्यंतं
कुंभीपाकेवसंतिते ॥ यस्मिन्देशेतुयत्तोयंयाचयत्रैवमृत्तिका ॥ सैवतत्रप्रशस्तास्यात्तयाशौचंविधीयते ॥ स्मृत्यर्थसारे ॥ अंतर्गृहेदे-
वगृहेवल्मीकेमूषकस्थले ॥ कृतशौचविशिष्टाश्चनग्राह्याःपंचमृत्तिकाः ॥ कालकृष्टेजलेचिंत्यांवल्मीकेगिरिमस्तके ॥ देवालयेनदीतीरे

दर्भेपुष्पेषुशाद्वले॥ कूलच्छायासुवृक्षेषुमार्गेगोष्टांबुभस्मसु ॥अग्नौचगच्छंस्तिष्ठंश्चविष्ठामूत्रंचनोत्सृजेत्॥देवाग्न्यर्काश्वसोमांबुसंध्यावुस्त्री
द्विजन्मनः॥पश्यन्नभिमुखश्चैतान्विष्ठामूत्रंचनोत्सृजेत् ॥अरण्येऽनुदकेरात्रौचोरव्याघ्राकुलेपथि॥कृत्वामूत्रपुरीषंतुद्रव्यहस्तोनदुष्य-
ति॥कच्छान्वितोमूत्रयुक्तस्तथारातिपुरीषयोः॥अज्ञानाद्यदिवाज्ञानात्समूढोनरकंव्रजेत्॥ मरीचिः॥विप्रेशुक्लापिमृच्छौचेरक्ताक्षत्रेवि
धीयते ॥ हरिद्वर्णातुवैश्येचशूद्रेकृष्णेतिनिर्दिशेत् ॥ यमः ॥ वापीकूपतटाकेषुनाहरेद्बाह्यतोमृदम् ॥ आहरेज्जलमध्यात्तुपरतोमणिबं
धनात् ॥ उधृत्योदकमादायमृत्तिकांसैववाग्यतः ॥ उदङ्मुखोदिवाकुर्याद्रात्रौचेद्दक्षिणामुखइति॥शातातपः॥एकालिंगेकरेसव्येति-
स्रोद्वेहस्तयोर्द्वयोः ॥ मूत्रशौचंसमाख्यातंशक्रातित्रिगुणंभवेत् ॥आदिसे ॥ स्त्रीशूद्रयोरर्धमानंप्रोक्तंशौचंमनीषिभिः ॥ दिवाशौ-
चस्यनिश्यर्धंपथिपादंविधीयते ॥ गृहीत्वाशिश्नमुत्थायमृद्भिरभ्युत्धृतैर्जलैः ॥ गंधलेपक्षयकरंशौचंकुर्यादतंद्रितः ॥ यद्दिवाविहितं
शौचंतदर्धंनिशिकीर्त्तितम् ॥ तदर्धमातुरेप्रोक्तंआतुरस्यार्धमध्वनि ॥ स्त्रीशूद्रयोरशक्तानांबालानांचोपवीतिनां ॥ गंधलेपक्षयकरं
शौचंप्रोक्तंमनीपिभिः ॥मनुः॥ संध्यासूदङ्मुखोहन्यपिनिशितुपनर्दक्षिणास्योनिवीतीकूर्यान्मूत्रादिशौचंबहिरथसलिलात्तत्रलिंगे-
मृदेका ॥ पंचापानेथहस्तेदशपुनरुभयोःसप्तचैतद्गृहस्थेद्वैगुण्यादिक्रमात्तद्व्रातिवानियातिपुस्यात्तर्धंनिशायां ॥एतच्छौचंगृहस्थस्याद्वि-
गुणंब्रह्मचारिणः॥ वानप्रस्थस्यत्रिगुणंयतीनांचचतुर्गुणं॥ धर्मप्रवृत्तौ ॥ शौचेयत्नःसदाकार्यःशौचमूलोद्विजःस्मृतः॥ शौचाचारवि
हीनस्यसमस्तानिष्फलाःक्रियाः॥मुत्रात्तुद्विगुणंशुक्रेमैथुनेत्रिगुणंस्मृतं॥ पद्भ्यांतुशोधयेतीरंनान्यथाशुचितामियात् ॥ पादपृष्ठेपाद
तलेतिस्रातिस्रश्चमृत्तिकाः ॥ एकैकयामृदापादौहस्तौप्रक्षालयेत्ततः ॥ वामंप्रक्षालयेत्पादंशूद्रादेर्वाःकथंचन ॥ शौचादृतेवामपादं

पश्चाद्दक्षिणमेवच॥ यतिश्चोद्विसृजेत्स्नात्वामूत्रंवाथमलंयदि॥ आजंघंक्षालयेन्मूत्रेद्विराचम्यकटिजले॥इतिशौचविधिः॥अथगंडूषाः॥ चतुरष्टद्विषट्संख्यष्टगंडूषैःशुद्ध्यतेक्रमात्॥ मूत्रेपुरीषेभुक्त्यंतेरेतःप्रस्रवणेपिच॥पुरतःसर्वदेवाश्चदक्षिणेपितरस्तथा॥ऋषयःपृष्ठतःसर्वे वामेगंडूषमुत्सृजेत्॥ प्राङ्मुखोदङ्मुखोवाथद्विराचम्यततःपरं ॥ उक्तकालेप्रकुर्वीतवाग्यतोदंतधावनमिति ॥ धर्मप्रवृत्तौ ॥ याज्ञ वल्क्यः॥ अंतर्जानुःशुचौदेशउपविष्टउदङ्मुखः ॥प्राग्वाब्राह्मेणतीर्थेनद्विजोनित्यमुपस्पृशेत् ॥यमः॥ आपःकरनखस्पृष्टायआचाम तिवैद्विजः ॥ सुरांपिबतिसव्यक्तंयमस्यवचनंयथा ॥ अकृत्वापादशौचंतुतिष्ठन्मुक्तशिखोपिवा ॥ विनायज्ञोपवीतेनआचांतो प्यशुचिर्भवेत् ॥ अधोवायुसमुत्सर्गेआक्रंदेक्रोधसंभवे ॥ मार्जारमूषकस्पर्शेप्रहासेनृतभाषणे ॥ निमित्तेष्वेषुसर्वेषुकर्मकुर्वन्नुपस्पृशेत् इतिबृहस्पतिः॥ देवलः॥भोजनेदंतलग्नानिनिर्हृत्याचमनंचरेत्॥ दंतलग्नमसंहार्यलेपंमन्येतदंतवत्॥बृहस्पतिः॥कृत्वालंपादशौचांवि मलमथजलंत्रिःपिबेदुन्मृजेद्विर्देशिन्यंगुष्ठकाभ्यांसजलमभिमृशेन्नासिकारंध्रयुग्मं ॥ अंगुष्ठानामिकाभ्यांनयनयुगयुतंकर्णयुग्मं- कनिष्ठांगुष्ठाभ्यांनाभिदेशंत्हृदयमथतलेनांगुलीभिःशिरोंसौ ॥ हारीतः ॥ आर्द्रवासाजलेकुर्यात्तर्पणाचमनंजपं ॥ शुष्क- वासाःस्थलेकुर्यात्तर्पणाचमनंजपमिति ॥ करकालांबुपात्रेणताम्रचर्मपुटेनच ॥ गृहीत्वास्वयमाचामेद्भूमिलग्नेननान्यथेति ॥ पा- रिजाते ॥ कौशिकः ॥ अपवित्रकरःकश्चिद्ब्राह्मणोयमुपस्पृशेत् ॥ अकृतंतस्यतत्सर्वमभक्ष्यायजनंयथा ॥ वामहस्तेस्थितेदर्भे- दक्षिणेनाचमेद्यदि ॥ रक्तंतुतद्भवेत्तोयंपीत्वाचांद्रायणंचरेत्॥ हस्तद्वयेपवित्रंचप्रशंसंतिचगौतमाः ॥ उभयत्रस्थितैर्दर्भैस्समाचा- मतियोद्विजः॥सोमपानफलंतस्यभुक्त्वायज्ञफलंलभेत्॥ सपवित्रेणहस्तेनकुर्यादाचमनक्रियाम्॥ नोच्छिष्टंतत्पवित्रंतुभुक्तोच्छिष्टंतु

वर्जयेत् ॥ चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकं ॥ एकैकन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमं ॥ अन्यानिचपवित्राणिकुशदूर्वात्मकानिवै ॥
पवित्रकूटलोहस्यकलांनार्हंतिषोडशीम् ॥ वामहस्तेकुशान्कृत्वा नपिबेद्दक्षिणेनतु ॥ नब्रह्मग्रंथिमाचामेन्नदूर्वाभिःकदाचन ॥ कुशैः
पूतंभवेत्स्नानंकुशेनोपस्पृशेद्द्विजः ॥कुशेनचाद्धृतंतोयंसोमपानेनसंमितं ॥ इतिव्यासः ॥ यमः ॥ कुशाःकाशास्तथादूर्वायवाव्रीहयए
वच॥बिल्वजाःपुंडरीकाणिसप्तधाबर्हिरुच्यतेइति॥कात्यायनः॥अनंतगर्भिणंसाग्रंकौशंद्विदलमेवच॥प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकु
त्रचित् ॥ स्मृत्यंतरे ॥ त्रिभिर्दर्भैःशांतिकर्मपंचभिःपौष्टिकंतथा ॥ चतुर्भिराभिचारंतुकुर्वन्कुर्यात्पवित्रकामिति ॥ ब्रह्मयज्ञेजपेचैवब्रह्मग्रं-
थिर्विधीयते॥भोजनेवर्तुलःप्रोक्तएषधर्मोनहीयतइति॥इत्याचमनपवित्रयोर्विधिः ॥अथदंतधावनम्॥मुखेपर्युषितेयस्मादुद्भवेदशुभां
नरः॥ततःकुर्यात्प्रयत्नेनशुध्यर्थंदंतधावनम् ॥खदिरश्चकरंजश्चकदंबश्चवटस्तथा ॥ तिंतृणीवेणुवृक्षश्चह्याम्रनिंबूतथैवच ॥ अपामार्गश्च
वृक्षश्चह्यर्कश्चोदुंबरस्तथा॥एतेप्रशस्ताःकथितादंतधावनकर्मसु॥समिधाक्षीरवृक्षस्यप्रमाणंद्वादशांगुलम् ॥ कनिष्ठिकावत्स्थूलंचपूर्वा
र्धेनत्रिरुक्षितम् ॥ स्मृतिसारसमुच्चये॥गुर्वार्कतालहिंतालकेतकीनमहावटाः॥खर्जूरीनारिकेलश्चसप्तैतेतृणराजतः॥तृणराजसमोपेतो
यःकुर्याद्दंतधावनम् ॥ नरश्चांडालयोनिःस्याद्यावद्गंगांनपश्यति ॥ इतिविष्णुः ॥ कंटाकिक्षीरवृक्षोत्थंद्वादशांगुलमव्रणं॥कनिष्ठांगुलि
वत्स्थूलंपूर्वार्धेकृतकूर्चकं॥जंबूदुंबरचूताश्वकदंबोलोध्रचंपकैः॥बदरीतिंडुकश्चेतिप्रोक्तादंतप्रधावने॥आयुर्बलंयशोवर्चःप्रजाःपशुवसू
निच॥ब्रह्मप्रज्ञांचमेधांचत्वंनोधेहिवनस्पते॥त्रिपुच्छिन्नमधोयातंभुक्त्वानिर्मितमुत्सृजेत् ॥ इतिदंतधावनविधिः॥अथदंतधावननिषेधः
स्मृतिसारसमुच्चये ॥ अभ्यंगेचोदधिस्नानेमैथुनेदंतधावने ॥ जातेचनिधनेचैवतातिथिस्तात्कालिकीस्मृता ॥ प्रतिपत्पर्वषष्ठीषुनवमीद्वा

दर्शींतथा॥दंतानांकाष्ठसंयोगंप्रयत्नेनविवर्जयेत्॥ स्मृतिः॥ अर्कवारेव्यतीपातेसंक्रांत्यांजन्मवासरे॥वर्जयेदंतकाष्ठंतुनंदादिषुतुपर्व
सु॥उदितेचसहस्रांशौयःकुर्याद्दंतधावनं॥सविताभक्षितस्तेनपितृवंशस्यघातकः॥स्मृत्यंतरे॥अंगारवालुकाभिश्चभस्मांगारनखैरपि॥
इष्टकालोष्टपाषाणैर्नकुर्याद्दंतधावनम्॥ इतिधर्मप्रवृत्तौ ॥ अन्यच्च॥ अष्टम्योश्चचतुर्दश्योःपंचदश्योस्त्रिजन्मसु॥व्यतीपातेचसंक्रांत्यां
दंतकाष्ठंनभक्षयेत्॥दीक्षितोब्रह्मचारीचयतिश्चविधवांगना॥ नित्यमद्याद्दंतकाष्ठममायांतुविवर्जयेत्॥ विष्णुः॥ प्रतिपद्दर्शषष्ठीषुचतु
र्दश्यष्टमीषुच ॥ द्वादश्यांचनवम्यांचवर्जयेद्दंतधावनम् ॥ यमः॥ श्राद्धेजन्मदिनेचैवविवाहेजीर्णदोषके ॥ व्रतेचैवोपवासेचवर्जयेद्दं
तधावनम्॥ व्यासः॥ अलाभेदंतकाष्ठानांनिषिद्धायांतथातिथौ॥अपांद्वादशगंडूषैर्विदध्याद्दंतधावनम्॥ तृणपर्णैस्सदाकुर्यादमामे
कादशींविना॥ तयोरपिचकुर्वीतजंबूप्लक्षरसालकैः॥स्मृत्यर्थसारे॥ तृणपर्णैर्मध्यमानामिकांगुष्ठैर्वानिषिद्धाहेपिकुर्युरिति॥इतिदंत
धावननिषेधविधिः॥ अथस्नानविधिः॥ उषःकालेतुसंप्राप्तेशौचंकृत्वायथार्थवत्॥ततःस्नानंप्रकुर्वीतदंतधावनपूर्वकमिति॥ अस्ना
तश्चपुमान्नार्होजपाग्निहवनादिषु॥प्रातःस्नानंतदर्थंतुनित्यस्नानंप्रकीर्तितं॥कुर्यान्नैमित्तिकंस्नानंशीताद्भिःकाम्यमेवच॥नित्यंयादृच्छि
कंचैवयथारुचिसमाचरेत्॥इतिगार्ग्यः॥स्नानंदानंजपोहोमःस्वाध्यायःपितृकर्मच॥एकवस्त्रोद्विजःकुर्यात्तत्सर्वंनिष्फलंभवेत्॥स्ना
नंनदीदेवखातेह्रदेषुचसरःसुच॥पंचपिंडान्समुद्धृत्यनस्नायात्परवारिणि॥स्नानमब्दैवतैर्लिंगैर्वारुणैश्चमृदासह॥ कुर्याद्व्याहृतिभिर्वा
थयत्किंचेदमृचापिवा॥ देवलः॥ एकांनदींसमासाद्यनान्यांस्नानेनदींस्मरेत्॥ शंखः॥ आपोअस्मानितिस्मृत्वाआदित्याभिमुख
स्थितः॥इदंविष्णुर्जपित्वातुप्रतिस्रोतोनिमज्जति॥ इतियाज्ञवल्क्यः॥तत्रविशेषः॥ अप्रवाहोदकेस्नानंविप्रपादाभिषेचनम्॥गायत्री

जपमर्घ्यंचसूर्यस्याभिमुखंचरेत् ॥ स्नानंतुद्विविधंप्रोक्तंगौणमुख्यप्रभेदतः ॥ तयोस्तुवारुणंमुख्यंतत्पुनःषड्विधंस्मृतं॥ नित्यंनैमित्तिकं
काम्यंक्रियांगंमलकर्षणं ॥ क्रियास्नानंतथाषष्ठंषोढास्नानंप्रकीर्त्तितं ॥ मार्कंडेयः ॥ अस्नात्वानाचरेत्कर्मजपहोमादिकिंचन॥ लि
लास्वेदसमाकीर्णःशयनादुत्थितःपुमान्॥ अत्यंतमलिनःकायोनवच्छिद्रसमन्वितः॥स्रवत्येवदिवारात्रौप्रातःस्नानंविशोधनं॥ प्रातः
स्नानंप्रशंसंतिदृष्टादृष्टकरंहितं ॥ सर्वमर्हतिशुद्धात्माप्रातःस्नायीजपादिकं ॥ शंखः ॥ उच्छिष्टाद्युपघातादौस्नानंनैमित्तिकंस्मृतं ॥
चंद्रसूर्योपरागादौतथैवगृहसूतके ॥ पुण्यस्नानादिकंचैवदैवज्ञविधिचोदितं॥ तद्धिकाम्यंसमुद्दिष्टंनाकामस्तत्प्रयोजयेत् ॥ धर्मक्रियां
कुर्तुमनाःपूर्वंस्नानंसमाचरेत् ॥ क्रियांगंतत्समुद्दिष्टंस्नानंचैवपरैर्द्विजैः ॥ तथाच ॥ जप्तुकामःपवित्राणिअर्चितादेवताःपितॄन् ॥
स्नानंसमाचरेद्यस्तुक्रियांगंतत्प्रकीर्त्तितं ॥ मलापकर्षणंनामस्नानमभ्यंगपूर्वकं ॥ मलापकर्षणायैवप्रवृत्तिस्तस्यनान्यथा॥ सरःसुदे
वखातेषुतीर्थेषुचनदीषुच ॥ क्रियास्नानंसमुद्दिष्टंस्नानंतत्रमताःक्रियाः । यत्तुतीर्थादिषुस्नानंक्रियास्नानंप्रकीर्तितं ॥ स्नानादेवफलं
यत्रक्रियास्नानंदिनेदिने ॥गौणंहि॥जाबालिः॥असामर्थ्याच्छरीरस्यदेशकालाद्यपेक्षया॥मंत्रस्नानादितःसप्तकेचिदिच्छंतिसूरयः॥
आपोहिष्ठादिभिर्मंत्रैर्मृदालंभश्चपार्थिवं ॥ योगी ॥ मांत्रंभौमंतथाग्नेयंवायव्यंदिव्यमेवच ॥ वारुणंमानसंचैवसप्तस्नानान्यनुक्रमात् ॥
आग्नेयंभस्मनास्नानंतद्दिव्यमितिचोच्यते॥ वारुणंचावगाहश्चमानसंविष्णुचिंतनं ॥ जाबालिः ॥ अशिरस्कंभवेत्स्नानंस्नानाशक्तौ
तुकर्मिणां ॥ आर्द्रेणवाससावापिमार्जनंकापिलंविदुः ॥ बृहस्पतिः ॥ पुण्यंकनखलेयच्चप्रयागेयच्चसुंदरी॥तत्फलंसकलंदेविभूतिस्नाने
विधीयते॥भूमिष्ठमुद्धृतात्पुण्यंततःप्रस्रवणोदकं॥ततोपिसारसंपुण्यंतस्मान्नादेयमुच्यते॥तीर्थतोयंततःपुण्यंततोगांगंतुसर्वशः ॥ मरी

चिः ॥ भूमिष्ठमुद्धृतंवापिशीतमुष्णमथापिवा ॥ गांगंपयःपुनात्याशुपापमामरणांतिकं ॥ शौनकः ॥ पुण्येतुजन्मनक्षत्रेव्यतीपाते चवैधृतौ ॥ अमायांतुनदीस्नानंपुनत्यासप्तमंकुलं ॥ आपएवसदापूतास्तासांवन्हिर्विशोधकः ॥ तस्मात्सर्वेषुकालेषुउष्णांभःपावनंस्मृतं ॥ मृतेजन्मनिसंक्रांतौश्राद्धेजन्मदिनेतथा ॥ अस्पृश्यस्पर्शनाच्चैवनस्नायादुष्णवारिणा ॥ पौर्णमास्यांतथादर्शेयःस्नायादुष्णवारिणा ॥ सगोहत्याकृतंपापंप्राप्नोतीहनसंशयः ॥ श्रीकामःसर्वदास्नानंकुर्वीतामलकैर्नरः ॥ सप्तमीनवमीचैवपर्वकालंच-वर्जयेत् ॥ इतिविष्णुः ॥ धर्मप्रवृत्तौ ॥ उत्तमंतुनदीस्नानंतडागेमध्यमंस्मृतं ॥ कूपेस्नानंतुसामान्यंभांडस्नानंवृथाभवेत् नदीषुदेवखातेषुप्रातःस्नायाद्दिनेदिने ॥ तदभावेतडागेवास्नावेस्नानंसमाचरेत् ॥ जलेनिमज्यबध्नीयाच्छिखामाचम्यवाग्यतः ॥ पुनराचम्यसंकल्प्यनद्यांस्नानंसमाचरेत् ॥ सप्ताहंप्रातरस्नायीद्विजःशूद्रत्वमाप्नुयात् ॥ तस्मात्स्नानंप्रकर्तव्यंरविवारेसदैवहि ॥ ॥ मनुः ॥ अत्यंतमलिनःकायोनवछिद्रसमन्वितः ॥ स्रवत्येवदिवारात्रौप्रातःस्नानंविशोधनं ॥ नदींगंतुमशक्तश्चेद्गृहेवास्नानमाचरेत् ॥ स्वयंचैवाथशिष्यैश्चपुत्रैर्वोद्धृतवारिणा ॥ पराशरः ॥ नस्नायाच्छूद्रहस्तेननैकहस्तेनवातथा ॥ उध्दृताभिरद्भिःस्नायादाहृताभिर्द्विजातिभिः ॥ द्विराचम्यनिमज्याथपुनरेवद्विराचमेत् ॥ मंत्रेणैवशिखांबध्वाप्राणानायम्यवैयतः ॥ यमः ॥ कराभ्यां धारयेद्दर्भान्शिखाबंधंविधायच ॥ प्राणायामंततःकुर्यात्संकल्पंचसमुच्चरेत् ॥ १ आपोहिष्ठेतिनवभिर्वारुणैर्मार्जयेदथ ॥ सांगुष्ठं यज्ञसूत्रेणात्रिःप्रदक्षिणमाचरेत् ॥ २ स्रोतसोभिमुखोमज्जेयत्राऽपःप्रवहंतिच ॥ स्थावरेषुचसर्वेषुह्यादित्याभिमुखस्तथा ॥ यायाः

पाठांतरे १ ॥ **विश्वामित्रः** ॥ नाभिमात्रेजलेतिष्ठन्सप्तद्वादशपंचच ॥ त्रिवारमपिचाल्पुत्यस्नानमेवंविधीयते ॥ स्नात्वाथदेहंप्रक्षाल्यपुनःस्नात्वासमाचरेत् २ याःप्रवतइमंमेगंगेइतिस्मृतिः ॥ संकल्पंसूक्तपठनंमार्जनंचाघमर्षणं ॥ देवतातर्पणंचैवपंचांगंस्नानमाचरेत् ॥

समुद्रगानद्यस्तासुस्नानंतुसंमुखं ॥ सर्वेषांशाखिनामेवंविनावाजसनेयिनः॥ वासिष्ठः ॥ स्नानंकृत्वाधृतेवस्त्रेपतंतिकेशबिंदवः ॥ तत्स्नानंनिष्फलंविद्यात्पुनःस्नानेनशुध्यति॥त्वन्नोअग्नेततश्चैवसत्वन्नोअग्नइत्यथ॥तरत्सइतिसूक्तंचजपन्स्नानंसमाचरेत्॥आग्नाअग्न० १ ऋक् आधीवासंपरि० २ अयंयज्ञोदे० ३ अतीयाम० ४ अग्नेभव० ५ अग्नेरक्षाणः० ६ अद्यामुरी० ७ अध्वर्योद्राव० ८ अग्निंदूतं० ९ अग्नेबाधस्वं० १० ताद्विष्णोःप० ११ यत्किंचेदं० १२॥हस्ताभ्यांजलमादायसकृदेवाभिमंत्रितं॥मस्तकेचमुखेबाव्हो हृदयेपृष्ठदेशके।अभिषिंचेत्स्वमात्मानंगायत्र्यायोनिमुद्रया।एकावृत्याजपेच्छक्त्यावैष्णवींबह्वृचंततः॥प्राङ्मुखोदेवतीर्थेननिवीतीच उदङ्मुखः।दक्षिणाभिमुखोभूत्वाप्राचीनावीतितर्पयेत्॥यन्मयादुष्कृतंतोयंशारीरमलसंभवात्॥ तत्पापस्यविशुध्यर्थंयक्ष्माणंतर्पयाम्यहम्॥असंस्काराश्चयेकेचिज्जलाशाःपितरोमम॥तेषामाप्यायनार्थायदीयतेसलिलंमया।हस्ताभ्यांवीक्षितंतोयंतत्तीरेसलिलाद्बहिः उत्तीर्यपीडयेद्वस्त्रंमंत्रतोदक्षिणेततः॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥ तेगृण्हंतुमयादत्तंवस्त्रनिष्पीडनोदकं॥ दर्भान्विसृज्यतत्तीरेत्युपवीतीद्विराचमेत् ॥ अक्लिन्नवस्त्रंसंप्रोक्ष्यशुचीवइतिमंत्रतः ॥ इतिधर्मप्रवृत्तौ ॥ संग्रहे ॥ प्रातर्मध्यान्हयोःस्नानं वानप्रस्थगृहस्थयोः ॥ यतेस्त्रिषवणंप्रोक्तंसकृत्तुब्रह्मचारिणः ॥नाभिमात्रजलेस्थित्वाकृत्वाकेशान्द्विधाद्विजः॥ निरुध्यकर्णौनासांचत्रिःकृत्वामज्जनंचरेत् ॥ शौनकः ॥ प्रसंम्राजेबृहत्सूक्तमष्टर्चंवारुणंजपेत् ॥ समुद्रादूर्मिरित्यपांसूक्तमेकादशर्चकं ॥ आपोअस्मानमातरइत्यृचंप्रजपेन्नरः ॥ अवगाह्यनिमज्याथद्विराचम्याभिषेचयेत्॥ अंबयोयंत्यृचाष्टौचापोहिष्टादयोनव॥ अद्भिःस्नात्वोदकेमग्नस्त्रिःपठेदघमर्षणमिति ॥ स्नानादनंतरेतावत्तर्पयेत्पितृदेवताः ॥ उत्तीर्यपीडयेद्वस्त्रंसंध्याकर्मततःपरमिति ॥ पितृदे

वताइत्यृषीणामुपलक्षणं ॥ क्रमश्चविवक्षितस्तेनदेवानृषीन्पितॄंश्चेत्यर्थः ॥ व्यासः ॥ यज्ञोपवीतीदेवानांनिवीतीऋषितर्पणे ॥ ॥ प्राचीनावीतीपित्र्येतुस्वेनतीर्थेनभावितः ॥ कार्ष्णाजिनिः ॥ देवऋषिपितॄणांचजलेदद्याज्जलांजलिं ॥ असंस्कृतप्रमीतानांस्थलेदद्याज्जलंपुनः ॥ बौधायनः ॥ जलांजलित्रयंदद्याद्येचान्येसंस्कृताभुवि ॥ असंस्कृतप्रमीतानामेकमेवतटेक्षिपेत् ॥ मंत्रः ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिमिति ॥ स्नानदर्भमोचनेस्मृतिः ॥ विकिरेपिंडदानेचतर्पणेस्नानकर्मणि ॥ आचांतःसन्प्रकुर्वीतदर्भसंस्रजनंबुधः ॥ इतिस्मृतिः ॥ स्नातःशिरोनावधूनेत्रांगेभ्यस्तोयमुद्धरेत् ॥ नचपूर्वधृतंवासोनचतैलमुपस्पृशेत् ॥ आजन्मकृतसाहस्रंयत्पापंकुरुतेक्वचित् ॥ मुच्यतेसर्वपापेभ्यस्नात्वैवंलक्षणांभसीति ॥ इतिस्नानविधिः ॥ अथवस्त्रविधिः ॥ संग्रहे ॥ स्वयंधौतेनकर्तव्याक्रियाधर्म्याविपश्चिता ॥ नतुनैरजकःधौतेननान्यहस्तेनकुत्रचित् ॥ ॥ भृगुः ॥ ॥ ब्राह्मणस्यसितंवस्त्रंनृपतेरक्तमुल्बणं ॥ पीतंवैश्यस्यशूद्रस्यनीलंमलवदिष्यते ॥ नीलीरक्तंतुयद्वस्त्रंदूरतस्तद्विवर्जयेत् ॥ स्त्रीणांक्रीडार्थसंयोगेशयनीयेनदुष्यति ॥ स्नानंदानंजपोहोमःस्वाध्यायःपितृकर्मच ॥ वृथातस्यमहायज्ञानीलीवासोविभर्तियः ॥ नीलीरक्तंयदावस्त्रंविप्रःस्वांगेषुधारयेत् ॥ तंतुसंततिसंख्याकैर्नरकेवसतेध्रुवं ॥ अहोरात्रोषितोभूत्वापंचगव्येनशुध्यति ॥ नीलीरक्तेनवस्त्रेणयदन्नमुपकल्पयेत् ॥ भोक्ताविषसमंभुंक्ते दाताचनरकंव्रजेत् ॥ इतिकाशीखंडे ॥ विकच्छोनुत्तरीयश्चनग्नश्चावस्त्रएवच ॥ श्रौतंस्मार्तंतथाकर्मननग्नश्चिंतयेदपि ॥ नग्नश्चमलवद्वासानग्नःकौशेयकेवलः ॥ नग्नोद्विगुणवस्त्रःस्यान्नग्नोदग्धपटस्तथा ॥ नग्नश्चस्थूलवस्त्रस्यान्नग्नोग्रंथितवस्त्रकः ॥ नग्नश्चबहुवस्त्रःस्या

होमेदेवार्चनाद्यासुक्रियासुपठनेतथा ॥ नैकवस्त्रःप्रवर्तेतद्विजोह्याचमनेजपे ॥ गोभिलः ॥ एकवस्त्रोनभुंजीतनकुर्याद्देवतार्चनं ॥ पारिजाते ॥ उत्तरीयंयोगपट्टंतर्जन्यारजतंतथा ॥ नजीवत्पितृकैर्धार्यंज्येष्ठोवाविद्यतेयदि ॥ स्मृत्यंतरे ॥ यज्ञोपवीतेद्वेधार्येश्रौतेस्मार्तेचकर्मणि ॥ तृतीयमुत्तरीयार्थंवस्त्राभावेतदिष्यते ॥ इतिधर्मप्रवृत्तौ ॥ याज्ञवल्क्यः ॥ दग्धंजीर्णंचमलिनंमूषकोपहतंतथा ॥ खादितंगोमहिष्याद्यैस्तत्त्याज्यंसर्वथाद्विजैः ॥ स्त्रियावस्त्रंसदात्याज्यमन्यवस्त्रंविसर्जयेत् ॥ अधौतंकारुधौतंचपूर्वेद्युर्धौतमेवच ॥ त्रयमेतन्नग्नःकौपिनकेवलः ॥ काषायवस्त्रःसाक्षाच्चदशनग्नाःप्रकीर्तिताः ॥ विष्णुपुराणे ॥ ... कंबलेपट्टसूत्रेतुनीलीदोषोनविद्यते ॥ ईषद्धौतंस्त्रियाद्धौतंशूद्रधौतंतथैवच ॥ अधौतंतच्चविज्ञेयंशुष्कंदक्षिणपल्लवैः ॥ स्मृतिः ॥ निष्पीड्यवस्त्रमाचम्यततःसंध्यामुपासते ॥ मध्यान्हेतर्पणादूर्ध्वंवस्त्रनिष्पीडनंभवेत् ॥ प्रातःस्नानेत्वशक्तश्चेन्मार्जयेदार्द्रवाससा ॥ उत्तमांगादिपादांतंसभवेत्स्नानकृद्द्विजः ॥ प्रातःस्नानेत्वशक्तश्चेत्संक्षिप्यस्नानमाचरेत् ॥ स्नानंचैवतुमध्यान्हेद्विजःकुर्यात्सविस्तरं ॥ संक्रांतौग्रहणेचैवह्यमावस्यार्कपर्वसु ॥ गृहेवापिअभ्यंगेचैवमांगल्येगृहेचैवतुसर्वदा ॥ शीतोदकेननस्नायान्नधार्यंगोपिचंदनं ॥ प्रकुर्वीतस्नानंशीतोदकेनच ॥ गृहस्नानेनकुर्वीततर्पणंमार्जनंतथा ॥ नांतराचमनंकुर्यात्पश्चादाचम्यशुध्यति ॥ अथसचैलस्नानं ॥ मातापितृविसृष्टानांक्रियामुत्सृज्ययाचकः ॥ श्वानकुक्कुटमार्जारमद्यमांसरजस्वलाः ॥ स्पृष्ट्वादेवलकंचैवसचैलंस्नानमाचरेत् ॥ देवार्चनपरोविप्रोवित्तार्थीवत्सरत्रयं ॥ सवैदेवलकोनामहव्यकव्येषुवर्जयेत् ॥ चितिंचचितिकाष्ठंचयूपंचांडालमेवच ॥ स्पृष्ट्वादेवलकंचैवसचैलंस्नानमाचरेत् ॥ इतिधर्मप्रवृत्तौ ॥ मनुः ॥ दिवाकीर्तिमुदक्यांचपतितंसूतकंतथा ॥ शवंतत्स्पर्शिनंचैवस्पृष्ट्वास्ना

नेनशुध्यति ॥ दीपाग्निर्दीपतैलंचभस्मचास्थिरजस्वला ॥ एतानिब्राह्मणस्पृष्ट्वासवासाजलमाविशेत् ॥ इतिनैमित्तिकस्नान विधिः ॥ इतिधर्मप्रवृत्तौ ॥ अथअन्यखातकूपस्नानविधिः ॥ अंत्यजैःखानिताःकूपास्तटाकादिस्तथैवच ॥ तेषुस्नात्वाचपीत्वाचपं चगव्येनशुध्यति ॥ नदीरजोदोषः ॥ सिंहकर्कटयोर्मध्येसर्वानद्योरजस्वलाः ॥ तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगाः ॥ व्याघ्रः ॥ उपाकर्मणिचोत्सर्गेप्रातःस्नानेतथैवच ॥ चंद्रसूर्यग्रहेचैवरजोदोषोनविद्यते ॥ गर्तानांसर्वदाचैवरजोदोषोनविद्यते ॥ तत्रस्नानं प्रकुर्वीतभार्गवस्यवचोयथा ॥ अथकुशविधिः ॥ कुशाःकाशायवादूर्वाउशिराश्चसकुंदराः ॥ गोधूमाव्रीहयोमुंजादशदर्भाः प्रकीर्तिताः ॥ पितृकृत्येषुसर्वेषुकुशाग्राह्याःसमाहिताः ॥ दूर्वाश्लक्ष्णाःसदाग्राह्यासर्वेषुशुभकर्मसु ॥ स्मृत्यर्थसारे ॥ यैः कृतःपिंडनिर्वापःश्राद्धंवापितृपार्वणं ॥ विण्मूत्रादिषुयेदर्भास्तेषांत्यागोविधीयते ॥ वनस्पतिगतेसोमेयस्तुहिंस्याद्वनस्पतीन् ॥ ॥ घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंशयः ॥ जाबालिः ॥ कुशाःशाकंचपुष्पाणिगवार्थंचतृणादिकं ॥ निषिद्धेपिचगृण्हीयादमावास्याहनिद्विजः ॥ मनुः ॥ ततःश्राद्धदिनेकर्तादिशंगछेत्तुदक्षिणां ॥ दक्षिणाप्रवणान्दर्भान्समूलानाहरेच्छुचिः ॥ ॥ पाराशरः ॥ समित्पुष्पजलादीनिश्रोत्रियःस्वयमाहरेत् ॥ शूद्रानीतैःक्रयक्रीतैःकर्मकुर्वन्व्रजत्यधः ॥ अथपवित्रलक्षणं ॥ ॥ स्मृत्यर्थसारे ॥ सर्वेषांवाभवेद्द्वाभ्यांपवित्रंग्रंथितंनवा ॥ द्वौदर्भौदक्षिणेहस्तेसव्येत्रीनासनेसकृत् ॥ हेमाद्रौ ॥ पंचभिःपौष्टिकेचैवचतुर्भिर्यज्ञकर्मणि ॥ पितृयज्ञेत्रिभिर्दर्भैर्द्वौदर्भौनित्यकर्मणि ॥ श्राद्धेग्राह्यास्त्रयःसाग्राःकुशाःस्युःषोडशांगुलाः ॥ द्विमूलमेकतःकुर्यात्पवित्रस्याग्रमेकतः ॥ द्व्यंगुलंमूलवलयंग्रंथिरेकांगुलिस्तथा ॥ चतुरंगुलमग्रंस्यात्पवित्रस्यप्रमाणकं ॥ स्नाने

दानेजपेयज्ञेस्वाध्यायेनित्यकर्मणि ॥ सपवित्रौसदर्भौवाकरौकुर्वीतनान्यथा ॥ ग्रंथिर्यस्यपवित्रस्यनतेनाचमनंभवेत् ॥ आ-
चमेद्यस्तुमोहात्मायथोच्छिष्टस्तथैवसः ॥ सपवित्रःसदर्भोवाकर्मांगाचमनंचरेत् ॥ नोच्छिष्टंतत्पवित्रंतुभुक्तोच्छिष्टंतुवर्जयेत् ॥ यो-
गी ॥ दार्भपवित्रंताम्रंवाराजतंहैममेवच ॥ भूषणंदक्षिणेपाणौपवित्रंचोत्तरोत्तरं ॥ याज्ञवल्क्यः ॥ अनामिकाधृतंहैमंत
र्जन्यांरौप्यमेवच ॥ कनिष्ठिक्यांधृतंखड्गंतेनपूतोभवेन्नरः ॥ तातेवाभ्रातरिज्येष्ठेयस्यचैवतुजीवति ॥ नतस्यमौनंतर्जन्यां-
रजतस्यचधारणं ॥ पादुकारोहणंचैवयोगपट्टंतथैवच ॥ नजीवत्पितृकःकुर्याद्गयाश्राद्धंतथैवच ॥ अथयज्ञोपवीतविधिः ॥
उपवीतंबटोरेकंद्वेतथेतरयोःस्मृते ॥ एकमेवयतीनांस्यादितिधर्मोव्यवस्थितः ॥ ॥ पराशरः ॥ ॥ रंध्रादिनाभिपर्यंतंब्रह्म-
सूत्रंपवित्रकं ॥ न्यूनेरोगप्रवृत्तिःस्यादधिकेधर्मनाशनं ॥ दशाष्टौवागृहस्थस्यचत्वारिवनचारिणः ॥ एकैकमुपवीतंचयति-
नोब्रह्मचारिणः ॥ यज्ञोपवीतेनैकेनजपहोमादिकंकृतं ॥ तत्सर्वंविलयंयातिपितॄणांनोपतिष्ठते ॥ पतितंत्रुटितंवापिब्रह्म
सूत्रंयदाभवेत् ॥ नूतनंधारयेद्विप्रःस्नानंसंकल्पपूर्वकं ॥ यज्ञोपवीतमेकैकंप्रतिमंत्रेणधारयेत् ॥ आचम्यप्रतिसंकल्प्यधारये
न्मुनिरब्रवीत् ॥ एकमंत्रैकसंकल्पंधृत्वायज्ञोपवीतकं ॥ एकस्मिन्त्रुटितेसर्वंत्रुटितंनात्रसंशयः ॥ यज्ञोपवीतमाजिनंमौंजींदं-
डंचधारयेत् ॥ नष्टेभ्रष्टेनवंधृत्वानष्टंचैवजलेक्षिपेत् ॥ मनुः ॥ कार्पासमुपवीतंस्याद्विप्रस्योर्ध्ववृतंत्रिवृत् ॥ शणसूत्रमयं
राज्ञोवैश्यस्याविसूत्रकं ॥ विधवारचितंसूत्रमनध्यायेकृतंचयत् ॥ त्रिछिन्नमप्यधोयातंभुक्तानिर्मितमुत्सृजेत् ॥ संग्रहे ॥
॥ ऊर्ध्ववृत्तमधोयातंपुनरूर्ध्वकृतंयथा ॥ एतद्यज्ञोपवीतंस्यात्तस्यैकाग्रंथिरुच्यते ॥ तैत्रामैत्राःकठाःकाण्वाश्चरकावाजसनेय-

काः ॥ कंठादुत्तीर्यसूत्रंतुकुर्युर्वैक्षालनंद्विजाः ॥ बव्हृचाःसामगाश्चैवयेचान्येयाजुषास्तथा ॥ कंठादुत्तीर्यसूत्रंतुपुनःसंस्कारमर्हति ॥ अभ्यंगेचोदधिस्नानेमातापित्रोर्मृतेहनि ॥ कंठादुत्तीर्यसूत्रंतुकुर्याद्वैक्षालनंद्विजः ॥ अथतिलकविधिः ॥ धर्मप्रवृत्तौ ॥ ललाटेतिलकंकुर्यान्मृदावापिचभस्मना ॥ तदभावेपितोयेनचंदनेनापिवाद्विजः ॥ स्मृतिसारसमुच्चये ॥ ऊर्ध्वपुंड्रंसुसौम्यंचललाटेयस्यदृश्यते ॥ सचांडालोपिशुद्धात्मापूज्यएवनसंशयः ॥ ब्रह्मघ्नोवापिगोघ्नोवाहैतुकःसर्वपापकृत् ॥ गोपीचंदनसंपर्कान्मुक्तोभवतितत्क्षणात् ॥ उर्ध्वपुंड्रंमृदाकुर्यात्तिर्यक्चैवतुभस्मना ॥ चंदनेनोभयंकुर्यादन्यथानरकंव्रजेत् ॥ स्नात्वापुंड्रंमृदाकुर्याद्धोमंकृत्वातुभस्मना ॥ अभ्यंगोत्सवकालेषुकस्तूरीचंदनादिना ॥ ऊर्ध्वपुंड्रंत्रिपुंड्रंवाब्राह्मणैःकर्मकर्तृभिः ॥ वर्जयेत्तिलकंभालेश्राद्धेचैवतुतर्पणे ॥ स्नानादौजपहोमादौस्वाध्यायेपितृकर्मणि ॥ यस्त्रिपुंड्रंविनाकुर्यात्तत्सर्वंनिष्फलंभवेत् ॥ ॥ अभ्यंगेसूतकेरात्रौविवाहेपुत्रजन्मनि ॥ मांगल्येषुचसर्वेषुनधार्यंगोपिचंदनं ॥ ऊर्ध्वपुंड्रंसदाकुर्याच्छ्रौतेस्मार्तेचकर्मणि ॥ ॥ नैवतिर्यङ्मृदाकुर्यादूर्ध्वपुंड्रंचभस्मना ॥ चंदनेनोभयंकुर्यादितितन्मनुरब्रवीत् ॥ त्रिपुंड्रंसुरविप्राणांवर्तुलंनृपवैश्ययोः ॥ ॥ अर्धचंद्रंतुशूद्राणामन्येषामूर्ध्वपुंड्रकं ॥ इतिधर्मप्रवृत्तौऊर्ध्वपुंड्रविधिः ॥ द्वारावत्युद्भवाद्गोपीचंदनादूर्ध्वपुंड्रकं ॥ धारयेन्नित्यमेवंहिपापंहंतिदिनेदिने ॥ जान्हवीतीरसंभूतांमृदंमूर्ध्निबिभर्तियः ॥ बिभर्तिरूपंसोर्कस्यतमोनाशायकेवलं ॥ अंगुष्ठःपुष्टिदःप्रोक्तोमध्यमायुष्करीभवेत् ॥ अनामिक्यन्नदानित्यंमुक्तिदाचप्रदेशिनी ॥ ललाटेकेशवंविद्यान्नारायणमथोदरे ॥ ॥ माधवंहृदिविन्यस्यगोविंदंकंठकूबरे ॥ उदरेदक्षिणेपार्श्वेविष्णुरित्यभिधीयते ॥ तत्पार्श्वेबाहुमध्येतुविन्यसेन्मधुसूदनं ॥

॥ त्रिविक्रमंकर्णदेशेवामकुक्षौतुवामनं ॥ श्रीधरंबाहुकेवामेहृषीकेशंतुकर्णके ॥ पृष्ठदेशेपद्मनाभंककुद्दामोदरंस्मरेत् ॥ द्वादशैतानिनामानिप्रणवंचैवमूर्धनि ॥ संकर्षणादिभिःकृष्णेशुक्लेचेत्केशवादिभिरिति ॥ भाले ॥ दशांगुलप्रमाणंतुत्तद्युत्तमोत्तममुच्यते ॥ नवांगुलंमध्यमंस्यादष्टांगुलमतःपरमिति ॥ शौनकः ॥ स्मृतिसारसमुच्चये ॥ गोपीचंदनलिप्तांगोयंयंपश्यतिचक्षुषा ॥ तंतंशुद्धंविजानीयान्नात्रकार्याविचारणा ॥ अशुचिर्वाप्यनाचारोमनसापापमाचरन् ॥ शुचिरेवभवेन्नित्यमूर्ध्वपुंड्रविनातुतत् ॥ यत्कर्मकारयेन्नित्यंतत्सर्वंनिष्फलंभवेत् ॥ ऊर्ध्वपुंड्रत्रिपुंड्रौतौधारयेद्द्वैदिकोत्तमः ॥ तयोरेकंपरित्यज्यरौरवंनरकंव्रजेत् ॥ नपादुकस्थोनादर्शेनजलेचावलोकयेत् ॥ नप्रावृतशिराःकुर्यात्तिलकंधर्मसाधनं ॥ वेदमार्गैकनिष्ठस्तुमोहेनाप्यंकितोयदि ॥ पतत्येवनसंदेहस्तथापुंड्रांतरादापि ॥ नांकनंविग्रहेकुर्याद्वेदपंथानमाश्रितः ॥ पुंड्रांतरंभ्रमाद्वापिललाटेनैवधारयेत् ॥ उर्ध्वपुंड्रंमृदाकुर्यात्त्रिपुंड्रंभस्मनाचरेत् ॥ ऊर्ध्वपुंड्रत्रिपुंड्रंवाःचंदनेनयथारुचि ॥ इतितिलकविधिः ॥ अथसंग्रहेत्रिपुंड्रविधिः ॥ कात्यायनः ॥ श्राद्धेयज्ञेजपेहोमेवैश्वदेवेसुरार्चने ॥ धृतत्रिपुंड्रःपूतात्मामृत्युंजयतिमानवः ॥ भविष्ये ॥ सितेनभस्मनाकुर्यात्त्रिसंध्यंचात्रिपुंड्रकं ॥ सर्वपापविनिर्मुक्तःशिवेनसहमोदते ॥ स्मृतिरत्नावल्यां ॥ ललाटेत्हृदयेनाभौगलांसेबाहुसंधिषु ॥ पृष्ठदेशेशिरस्येवंस्छानेष्वेतेषुधारयेत् ॥ पुलस्त्यः ॥ अग्निरित्यादिभिर्मंत्रैशुद्धब्रह्माभिमंत्रितं ॥ शिवमंत्रेणतद्धार्यंमंत्रेणाष्टाक्षरेणवा ॥ गायत्र्यावाचदेवर्षेमंत्रेणप्रणवेनवा ॥ करोतिशिवमंत्रेणयस्त्रिपुंड्रंद्विजोत्तमः ॥ त्र्यक्षःशूलधरःसौम्योशिवलोकेमहीयते ॥ अष्टाक्षरेणमंत्रेणयःकरोतित्रिपुंड्रकं ॥ विष्णोःपदमवाप्नोतिनान्यथाश्रुतिचोदितं ॥ सौरंपदमवाप्नोतिगायत्र्यामुनि

सत्तम ॥ प्राप्नोतिब्रह्मणोरूपंप्रणवेननसंशयः ॥ इति ॥ अग्निरितिभस्म ॥ वायुरितिभस्म ॥ जलमितिभस्म ॥ स्थलमितिभस्म ॥ व्योमेतिभस्म ॥ ॥ सर्वँहवाइदंभस्म ॥ ॥ तस्माद्भस्मतमेतत् ॥ पाशुपतंभस्मनासंस्पृशेत् ॥ तस्माद्ब्रह्मतमेतत् ॥ रत्नावल्यां ॥ मध्यमानामिकांगुष्ठैरनुलोमविलोमतः ॥ अतिस्वल्पमनायुष्यमतिदीर्घंतपःक्षयं ॥ नेत्रयुग्मप्रमाणेनत्रिपुंड्रंधारयेद्द्विजः ॥ ॥ पारिजाते ॥ ॥ धार्यंभस्मत्रिसंध्यंतुगृहिणाजलसंयुतं ॥ सर्वकालंभवेत्स्त्रीणांय तीनांजलवर्जितं ॥ वानप्रस्थस्यकन्यानांदीक्षितानांनृणांतथा ॥ मध्यान्हात्प्राग्जलैर्युक्तंपरतोजलवर्जितम् ॥ मध्यांगुलीत्रयेणैवस्वदक्षिणकरस्यच ॥ त्रिपुंड्रंधारयेद्विद्वान्सर्वकल्मषनाशनं ॥ त्रिपुंड्रंयद्यधृत्वातुकुर्यात्कर्मतुतद्वृथा ॥ प्रत्या- ख्यातप्रमादस्यश्रूयतेतैत्तिरेयके ॥ भूत्यैनप्रमदितव्यं ॥ भस्मनोद्धूलनंचैवतथातिर्यक्त्रिपुंड्रकं ॥ श्रुत्याविधीयतेयस्मात्तत्त्यागीप- तितोभवेत् ॥ बौधायनः ॥ येभस्मधारिणंदृष्ट्वावाचानिंदंतिमानवाः ॥ तेषांशूद्रेणसंभूतिरनुमेयाविपश्चिता ॥ गौतमः ॥ शंखच- क्रान्वितंकर्मयत्कृतंसुकृतंभवेत् ॥ अंकनंधारयेद्यस्तुरौरवंनरकंव्रजेत् ॥ कश्यपः ॥ भस्महीनंतुयत्कर्मकरोतिज्ञानदुर्बलः ॥ सर्वंतद्व्यर्थमेवस्यात्तस्माद्भस्मैवधारयेत् ॥ व्याघ्रपादः ॥ यस्यभस्मनिविद्वेषःसतुचांडालजःस्मृतः ॥ तस्यदर्शनमात्रेणसवासाजल माविशेत् ॥ धारणप्रकारः ॥ स्मृत्यंतसारे ॥ अग्निरितिभस्मेत्यभिमंत्र्यमानस्तोकेतिकश्यपस्येतिद्वाभ्यामुदकेनालोड्य ॥ ईशानायनमइतिशिरसि ॥ तत्पुरुषायेतिमुखे ॥ अघोरायेतिहृदये ॥ वामदेवायेत्यूर्वोः ॥ सद्योजातायेतित्रिपुंड्रं ॥ ब्रह्मणेनमइति- ललाटे ॥ स्कंदायेतिनाभौ ॥ अग्नयेनमइतिहृदये ॥ पूष्णेनमइतिकंठे ॥ रुद्रायेतिदक्षिणबाहुमूले ॥ आदित्यायेतिदक्षिणकर्पूरे

॥ चंद्रायेतिदक्षिणमणिबंधे ॥ वामदेवायेतिवामबाहुमूले ॥ प्रभंजनायेतिवामकर्पूरे ॥ वसुभ्योनमइतिवाममणिबंधे ॥ हरायेति
पृष्ठे ॥ आत्मनेनमइतिशिरसि ॥ अतोग्निहोत्रजेनैवभस्मनाचत्रिपुंड्रकं ॥ नित्यंद्विजोऽप्रमादेनकुर्यात्कर्मविशुद्धये ॥ अन्यथास
र्वकर्माणिनफलंतिकदाचन ॥ त्रिपुंड्रधृग्वरोविप्रोयोरुद्राक्षधरःशुचिः ॥ सहंतिरोगदुरितव्याधिदुर्भिक्षतस्करान् ॥ सम्प्राप्नोति
परंब्रह्मयतोनावर्ततेपुनः ॥ सपंक्तिपावनःश्राद्धेपूज्योविप्रैःसुरैरपि ॥ इतिसंग्रहेत्रिपुंड्रविधिः ॥ अथधर्मप्रवृत्तौभस्मधारणविधिः
ब्राह्मणानांनृपाणांचभस्ममिश्रंतुचंदनं ॥ नेत्रयुग्मप्रमाणंचत्रिपुंड्रंधारयेद्विजः ॥ नारदः ॥ त्रिपुंड्रंपरमंपुण्यंकुर्याद्विष्णु
शिवात्मकं ॥ येजीवाराक्षसाःप्रोक्तायेचान्येक्षुद्रजंतवः ॥ त्रिपुंड्रधारणंदृष्ट्वापलायंतेनसंशयः ॥ विष्णुः ॥ यस्यपंक्तौ
द्विजोभुंक्तेशिवभक्तस्त्रिपुंड्रधृक् ॥ सतांपक्तिंपुनात्येवसकलांचतुरानन ॥ भक्तिर्यस्यभवेद्यस्मिन्मृदिवाप्यथभस्मनि ॥ तदे
वधारयेद्विद्वानितिवैमुनयोविदुः ॥ इतिधर्मप्रवृत्तौभस्मधारणविधिः ॥ अथसंध्याकालः ॥ अहोरात्रस्ययौसंधीसूर्यनक्ष
त्रवर्जितौ ॥ तयोःसंध्यासमाख्यातामुनिभिस्तत्वदर्शिभिः ॥ संध्योत्तमातृतीयांशेपंचधांशादिनस्यतु ॥ मध्यान्हीकीतदू-
र्ध्वंवापूर्वंवास्यादिवैवाहि ॥ संध्याकालेतुसंप्राप्तेसंध्यानैवमुपासिता ॥ जीवमानोभवेच्छूद्रोमृतःश्वाचैवजायते ॥ कालेतुवंदि
तासंध्यास्वर्गमोक्षप्रदायिनी ॥ अकालेवंदितासंध्यासाचवंध्यावधूरिव ॥ अथकाललोपप्रायश्चित्तं ॥ संध्याकालेत्वति-
क्रांतेस्नात्वाचैवयथाविधि ॥ जपेदष्टशतंदेवींततःसंध्यांसमाचरेत् ॥ जमदग्निः ॥ एकाहंसमतिक्रम्यप्रमादादकृतंयदि ॥
॥ अहोरात्रोषितोभूत्वागायत्र्याश्चायुतंजपेत् ॥ राष्ट्रभंगेनृपक्षोभेरोगार्तेसूतकेपिच ॥ संध्यावंदनाविच्छित्तिर्नदोषायकदाचन ॥




॥ ८ ॥

देवाश्चद्विजविद्यानांकार्येमहतिसंस्थिते ॥ संध्याहीनेनदोषोस्तियतस्तत्कर्मसाधनात् ॥ इतिधर्मप्रवृत्तौसंध्याकाललोपप्राय-
श्चितं ॥ अथसंग्रहेसंध्याविधिः ॥ संध्यात्रयंतुकर्तव्यंद्विजेनात्मविदासदेति ॥ व्यासः ॥ गायत्रीनामपूर्वाण्हेसावित्री
मध्यमेदिने ॥ सरस्वतीचसायान्हेसैवसंध्यात्रिषुस्मृतेति ॥ अत्रसंध्याशब्दआदित्यशब्दवाच्यदेवतापरः ॥ संध्याकालोपास्यत्वादि
तिमाधवः ॥ सम्यग्ध्येयत्वात्संध्या ॥ अथसंध्याकालः ॥ उत्तमाताराकोपेतामध्यमालुप्ततारका ॥ अधमासूर्यसहिता
प्रातःसंध्यात्रिधामता ॥ उत्तमासूर्यसहितामध्यमालुप्तसूर्यका ॥ कनिष्ठातारकोपेतासायंसंध्यात्रिधामतेति ॥ अथदेशः ॥
॥ व्यासः ॥ गृहेत्वेकगुणासंध्यागोष्टेदशगुणामता ॥ दशसाहस्रिकानद्यामनंताविष्णुसंनिधौ ॥ बहिःसंध्यादशगुणाअ-
नंताजान्हवीजले ॥ शातातपः ॥ अनृतंमद्यगंधंचादिवामैथुनमेवच ॥ पुनातिवृषलस्यान्नंबाहिःसंध्यात्युपासितेति ॥ अ-
त्रिः ॥ संध्यात्रयंतुकर्तव्यंद्विजेनात्मविदासदा ॥ उभेसंध्येतुकर्तव्येब्राह्मणैस्तुगृहेष्वपीति ॥ अथसंध्याप्रयोगः ॥ आ-
चमनप्राणायामौकृत्वा ॥ शौनकः ॥ नासिकामंगुलीभिश्चतर्जनीमध्यमाहते ॥ दक्षिणेनसमाकृष्यसव्येनतुविसर्जयेत् ॥ प्रण-
वादिशिरोंतांतुगायत्रींत्रिःपठेद्द्विजः ॥ प्राणानायम्याविधिवद्वाग्यतःसंयतेंद्रियः ॥ अथसंध्यामुपासिष्यइतिसंकल्पमुच्चरेत् ॥
॥ ऋग्विधाने ॥ नवप्रणवयुक्तेनआपोहिष्ठातृचेनच ॥ संवत्सरकृतंपापंमार्जनांतेविनश्यतीति ॥ मंत्राचमनंगृह्यपरिशिष्टे ॥ सू
र्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यःपापेभ्योरक्षंतांयद्रात्र्यापापमकार्षंमनसावाचाहस्ताभ्यांपद्भ्यामुदरेणशिश्नारात्रिस्तदवलुंप-
तुयत्किंचिदुरितंमयि इदमहंमाममृतयोनौसूर्येज्योतिषिजुहोमिस्वाहेतिप्रातः ॥ आपःपुनंत्वितिमध्यान्हे ॥ सूर्यस्थानेऽग्निपदं रात्रि

स्छानेअन्हपदंसस्रेज्योतिपीतिसायं॥गृह्यपरिशिष्टेद्वितीयमार्जनंपुनराचम्यमार्जयेत् ॥ आपोहिष्ठेतिसूक्तेनगायत्रीशिरसाचांभसा
आत्मानंपरिषिंचेत् ॥ भगवान् ॥ प्रणवेनव्यात्दृतिभिर्गायत्र्याप्रणवाद्यया ॥ आपोहिष्ठेतिसूक्तेनमार्जनंहिचतुर्थकं ॥ प्रजापतिः ॥
॥ ऋगंतेमार्जनंकुर्यात्पादांतेवासमाहितः ॥ अर्धर्चांतेथवाकुर्याच्छिष्टानांमतमीदृशं ॥ भगवान् ॥ उधृत्यदक्षिणेहस्तेजलं
गोकर्णवत्कृते ॥ निःश्वासंनासिकाग्रेतुपाप्मानंपुरुषंस्मरेत् ॥ ऋतंचेतितृचेनैवतज्जलंतुक्षितौक्षिपेत् ॥ जलेष्वर्घ्यंप्रदातव्यं
जलाभावेशुचिस्छले ॥ संप्रोक्ष्यवारिणासम्यक्ततोर्घ्यंतुप्रदापयेदिति ॥ अथगायत्रीजपः ॥ तथाचगृह्यं ॥ यज्ञोपवीती
नित्योदकः संध्यामुपासीतवाग्यतः सायमुत्तरापराभिमुखोन्वष्टमदेशंसावित्रींजपेदर्धास्तमितेमंडलआनक्षत्रदर्शनादेवंप्रातः
प्राङ्मुखस्तिष्ठन्नामंडलदर्शनात्इति ॥ स्मृत्वोंकारंचगायत्रींबध्नीयात्तुशिखांततः ॥ पुनराचम्यहृदयंबाहुस्कंधौचसंस्पृशेत् ॥
॥ शंखः ॥ दैवादिदिवाकर्माऽकृतेविशेषःस्मर्यते ॥ रात्रौप्रहरपर्यंतंदिवाकर्माणिकारयेत् ॥ अवगाहंब्रह्मयज्ञंसौरजप्यंच
वर्जयेत्इति ॥ अथगायत्रीन्यासः ॥ ॐभूःहृदयायनमः ॥ ॐभुवःशिरसेस्वाहा ॥ ॐस्वःशिखायैवषट् ॥ ॐतत्सवितुर्व
रेण्यं ॥ कवचायहुं॥ॐभर्गोदेवस्यधीमहि ॥ नेत्रत्रयायवौषट्॥ॐधियोयोनःप्रचोदयात्॥अस्त्रायफट्॥ ॐअकारंनाभौ ॥ ॐउका
रंहृदये ॥ ॐमकारंमूर्ध्नि ॥ ॐभूःपादाभ्यां० ॥ ॐभुवःजानुभ्यां० ॥ ॐस्वःगुह्याय० ॥ महःनाभ्यैनमः ॥ जनःहृदयाय०॥
॥ तपःकंठाय० ॥ सत्यं शिरसे० ॥ तत्पादाभ्यां० ॥ सवितुर्जंघाभ्यां० ॥ वरेण्यंकट्यै० ॥ भर्गः नाभ्यै० ॥ देवस्यहृदया-
य० ॥ धीमहिकंठाय० ॥ धियःमुखाय० ॥ योनःललाटाय० ॥ प्रचोदयात्शिखायैवौषट् ॥ अथाक्षरन्यासः ॥ तत्पा

दाभ्यां० ॥ सगुल्फाभ्यां० ॥ विजंघाभ्यां० ॥ तुजानुभ्यां० ॥ वँऊरुभ्यां० ॥ रेगुदाय० ॥ णिलिंगाय० ॥ यंकट्यै: ॥ भनाभ्यै न० ॥ गोंउदराय० ॥ देस्तनाभ्यांन० ॥ वहृदयाय० ॥ स्यकंठाय० ॥ धीमुखाय० ॥ मतालुदेशाय० ॥ हिनासिकायै० ॥ ॥ धिनेत्राभ्यां० ॥ योभ्रूभ्यां० ॥ योललाटाय० ॥ नःपूर्वमुखाय० ॥ प्रदक्षिणमुखाय० ॥ चोपश्चिममुखाय० ॥ दउत्तरमुखाय० ॥ यामूर्ध्नेत्० ॥ तृसर्वत्र ॥ आपोगुह्याय ० ॥ ज्योतिर्नेत्राभ्यां० ॥ रसोमुखाय० ॥ अमृतंजानुभ्यां० ॥ ब्रह्मभूःपादाभ्यां० ॥ ॥ भुवःनाभ्यै ॥ स्वरोंललाटाय० ॥ अथक्रमेणध्यानानि ॥ प्रातःसंध्यांगायत्रींत्र्यक्षांबालामक्षसूत्रकमंडलुधरांरक्तांरक्तवर्णां ॥ ऋग्वेदकृतोत्संगांरक्तपुष्पमालाविभूषितांब्रह्माणीं ब्रह्मदैवत्यांब्रह्मलोकनिवासिनीं ॥ आवाहयाम्यहंदेवीमायांतींसूर्यमंडलात् ॥ अन्यच्च ॥ मुक्ताविद्रुमहेमनीलधवलछायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटांतत्वार्थवर्णात्मिकां ॥ गायत्रींवरदाभयांकुशकरांशुभ्रंकपालंगुणंशंखंचक्रमथारविंदयुगलंहस्तैर्वहंतींभजे ॥ एवंध्यात्वाजपेन्मौनीगायत्रींश्रद्धयान्वितः ॥ अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतुवा ॥ अष्टाविंशतिवारंवादशवारमथापिवा ॥ अथाचगृह्यपरिशिष्टे ॥ शुचौदेशेदर्भांभसोक्षितेद-र्भान्संस्तीर्यव्याहृतिभिरुपविश्यप्राणायामत्रयंकृत्वाऋषिदैवतछंदांस्यनुस्मृत्यषड्भिस्तदंगैर्मंत्रैर्यथांगमात्मानंतद्रूपंभावयेत् ॥ ॥ अस्त्रंप्राच्यादिदशदिक्षुन्यसेत् ॥ एषोंगन्यासोप्येकेनेच्छंति ॥ सहिविधिर्वैदिकइति ॥ अथमंत्रदेवतांध्यात्वा ॥ ॥ आगच्छवरदेदेवीत्यावाह्यतिष्ठन्नर्धनक्षत्रेष्वामंडलदर्शनात् मंत्रार्थमनुसंदधानः ॥ प्रणवव्याहृतिपूर्वकंसावित्रींजपेदिति ॥ ॥ ऋष्यादिन्यासानंतरं ॥ सहस्रपरमांदेवींशतमध्यांदशावरां ॥ गायत्रींसंस्मरेद्धीमान्हादिवासूर्यमंडले ॥ व्यासः ॥ ब्रह्मचारी

गृहस्थश्चशतमष्टोत्तरंजपेत् ॥ वानप्रस्थोयतिश्चैवसहस्रादाधिकंजपेत् ॥ अष्टोत्तरशतंनित्यमष्टाविंशतिमेववा ॥ विधिनाद-
शकंचैवत्रिकालेपिजपेद्बुधइति ॥ वस्त्रेणाच्छाद्यतुकरंदक्षिणंयःसदाजपेत् ॥ तस्यतत्सफलंजप्यंतद्धीनमफलंस्मृतं ॥ व्यासः ॥
॥ गायत्रीतुभवेद्रक्तासावित्रीशुक्लवर्णिका ॥ सरस्वतीतथाकृष्णाउपास्यावर्णभेदतइति ॥ गायत्रीब्रह्मरूपातुसावित्रीरुद्ररू
पिणी ॥ सरस्वतीविष्णुरूपाज्ञेयावर्णप्रभेदतः ॥ अथासनानि ॥ कौशेयंकंबलंचैवअजिनंपट्टमेवच ॥ दर्भजंबालपत्रंच
आसनंपरिकल्पयेत् ॥ शंखरुप्यमयीमालाकांचनीवनजोत्पलैः ॥ पद्माक्षकैश्चरुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः ॥ वंशासनेदरिद्रःस्या
त्पाषाणेव्याधिसंभवः ॥ धरण्यांदुःखसंभूतिर्दौर्भाग्यंदारुकासने ॥ तृणासनेयशोहानिःपल्लवेचित्तविभ्रमः ॥ कृष्णाजिनेज्ञान
सिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ आभिचारेचनीलंस्यात्कंबलंव्याधिकर्मसु ॥ श्वेतवस्त्रेयशोवृद्धिःसर्वार्थाश्चित्रकंबले ॥ सायणीये ॥
भिन्नासनंयोगपट्टस्तथैवमृगचर्मच ॥ कृष्णाजिनंचयत्नेनवर्जयेत्पुत्रवान्सदा ॥ आधारादिनमस्कुर्यात्कुशाग्रैरासनंततः ॥ प्राणा-
यामत्रयंकुर्यादुपविश्यकुशासने ॥ अथकामनापरत्वान्मालाविधिः ॥ शंखाक्षमणयःश्रीदाःस्फाटिकामोक्षदाःपराः ॥ पद्माक्षाः
पुष्टिलक्ष्मीदारुद्राक्षाभुक्तिमुक्तिमुदाः ॥ पापक्षयाःकुशमयाःकामदाःस्वर्णरौप्यजाः ॥ प्रवाळमुक्तास्फटिकैर्जपःकोटिफलप्रदः ॥
पुत्रजीवभवाःपुत्रपशुधान्यसमृद्धिदाः ॥ विद्रुमावश्यधनदाःसौभाग्यार्थाश्चमौक्तिदाः ॥ तुळसीमणिनायेनगणनंचाक्षयंभवेत् ॥
रुद्राक्षमणिनाचैवह्यनंतंफलमश्नुते॥ अथरुद्राक्षधारणं ॥ रुद्राक्षान्कंठदेशेदशनपरिमितान्मस्तकेविंशतीद्वेषट्पट्कर्णप्रदेशेकरयुगल
कृतेद्वादशद्वादशैव ॥ वन्होरिंदोःकलाभिर्नयनयुगकृतएकमेकंशिखायांवक्षस्याष्टाधिकंयःकलयतिचशतंसःस्वयंनीलकंठः ॥

अथमुद्राः ॥ सुमुखंसंपुटंचैववितंतविस्तृतंतथा ॥ द्विमुखंत्रिमुखंचैवचतुःपंचमुखंतथा ॥ षण्मुखाधोमुखंचैवव्यापकांजलिकं तथा ॥ शकटंयमपाशंचग्रंथितंचोल्मुकोन्मुखं ॥ प्रलंबंमुष्टिकंचैवमत्स्यःकूर्मवराहकं ॥ सिंहःक्रांतंमहाक्रांतंमुद्गरंपल्लवंतथा ॥ ॥ चतुर्विंशतिमुद्रैतागायत्र्याःसंप्रकीर्तिताः ॥ एतामुद्रानजानातिगायत्रीनिष्फलाभवेत् ॥ अथगायत्रीतर्पणं ॥ अस्मिन्कालेसर्वव्यापिसवितृप्रीत्यर्थंगायत्रीतर्पणमहंकरिष्ये ॥ ॐभूःपुरुषमृग्वेदायनमस्तर्पयामि ॥ ॐभुवःपुरुषंयजुर्वेदायनमस्तर्पयामि ॥ ॐस्वःपुरुषंसामवेदायनमस्त० ॥ ॐमहःपुरुषमथर्ववेदायनमस्त० ॥ ॐजनःपुरुषमितिहासपुराणेभ्योनमस्त० ॥ ॥ ॐतपःपुरुषंसर्वागमायनमस्त० ॥ ॐसत्यंपुरुषंसर्वलोकायनमस्त० ॥ ॐभूर्भुवःस्वऋग्यजुःसाममंडलांतर्गतायश्रीसवित्रेनमस्त० ॥ ॐभूःएकपदागायत्र्यै० ॥ ॐभुवःद्विपदागायत्र्यैनमस्त० ॥ ॐस्वस्त्रिपदागायत्र्यैनमस्त० ॥ ॐभूर्भुवःस्वश्चतुष्पदागायत्र्यैनमस्त० ॥ उपसेनमस्त० ॥ गायत्र्यैनमस्त० ॥ सावित्र्यै० ॥ सरस्वत्यै० ॥ वेदमात्रे० ॥ पृथिव्यै० ॥ जयायै० ॥ सांकृत्यै० ॥ कौशिक्यै० ॥ सर्वापराजित्यै० ॥ सहस्रमूर्त्यै० ॥ अनंतानंतमूर्त्यै० ॥ २४ ॥ इतिगायत्रीतर्पणं ॥ अथसंध्यातर्पणं ॥ गायत्र्याव्यासऋषिः ॥ ब्रह्मादेवता ॥ गायत्रीछंदः ॥ प्रातःसंध्यातर्पणेवि० ॥ ॐभूःपुरुषंतर्पयामि ॥ १ ॥ ऋग्वेदंत० ॥ २॥ मंडलंत० ॥ ३ ॥ हिरण्यगर्भरूपिणंत० ॥ ४ ॥ आत्मानंत० ॥ ५ ॥ वेदमातरं० ॥ ६ ॥ गायत्रीं० ॥ ७ ॥ सांकृतिं० ॥ ८ संध्यां०॥९॥ कौमारीं० ॥ १० ॥ ब्राह्मीं० ॥ ११ ॥ उषसं० ॥ १२ ॥ निर्भुजं० ॥ १३ ॥ सर्वार्थसिद्धिकरीं० ॥ १४ ॥ सर्वमंत्राधिपतिं० ॥ १५ ॥ भूर्भुवःस्वःपुरुषं० ॥ १६ ॥ इतिप्रातः ॥ सावित्र्याकश्यपऋषिःरुद्रोदेवताउष्णिकछंदःमाध्यान्हसंध्यातर्पणेविनि

योगः ॥ १ ॐभूःपुरुषंत० ॥ २ ॐभुवःपुरुषं० ॥ ३ यजुर्वेदं० ॥ ४ मंडलं० ॥ ५ रुद्ररूपिणं० ॥ ६ आत्मानं० ॥ ७ वेदमातरं० ८ सावित्रीं० ॥ ९ सांकृतीं० ॥ १० संध्यां० ॥ ११ युवतीं० ॥ १२ रौद्रीं० ॥ १३ उषमासीं० ॥ १४ निर्मृजां० ॥ १५ सर्वार्थसिद्धीकरीं० ॥ १६ सर्वमंत्राधिपतिं० ॥ १७ ॐभूर्भुवःस्वःपुरुषं ॥ इतिमध्यान्हे ॥ सरस्वत्यावशिष्ठऋषिः ॥ विष्णुर्देवता ॥ अनुष्टुप्छंदः ॥ सायंसंध्यातर्पणेविनियोगः ॥ १ ॐस्वःपुरुषंत० ॥ २ सामवेदं० ॥ ३ मंडलं० ॥ ४ विष्णुरूपिणं० ५ आत्मानं० ॥ ६ वेदमातरं० ॥ ७ सरस्वतीं० ॥ ८ सांकृतिं० ॥ ९ संध्यां० ॥ १० सवितारं० ॥ ११ वैष्णवीं० ॥ १२ उपसं० ॥ १३ निर्मृजीं० ॥ १४ सर्वार्थसिद्धिकरीं० ॥ १५ सर्वमंत्राधिपतिं० ॥ १६ ॐभूर्भुवःस्वःपुरुषं० ॥ इतिसायं ॥ ॥ अथोपस्थानंगृह्यपरिशिष्टे ॥ मित्रोजनानितिवर्चस्यसूक्तस्यगाथिनोविश्वामित्रऋषिः ॥ मित्रोदेवता ॥ त्रिष्टुप्छंदः ॥ अंत्या श्वतस्रोगायत्र्यः ॥ मित्रोपस्थानेवि० ॥ तद्वोदिवइतिमंत्रस्यगौतमोवामदेवऊषात्रिष्टुप् ॥ उपोप० ॥ गणानांत्वाशौनको गृत्समदोगणपतिर्जगति ॥ गणपत्युप० ॥ जातवेदसेमारीचःकश्यपोदुर्गात्रिष्टुप् ॥ दुर्गाप्री० उ० ॥ त्र्यंबकमितिमैत्रावरुणिर्वसिष्ठोरुद्रोनुष्टुप् ॥ रुद्रप्रीत्यर्थेउ० ॥ तच्छंयोर्नमोब्रह्मणइतिप्रातः ॥ मध्यान्हकालमधिकृत्यउद्वाहुरुदङ्मुखः ॥ उदुत्यं जातवेदसमित्यादि ॥ गायत्रीजपमासीनोयथेष्टंकुर्यात् ॥ अथसायं ॥ यच्चिद्धीतिदशर्चस्याजीगर्तिःशुनःशेपःसंकृत्रिमोदेवरातोवरुणोगायत्री ॥ वरुणप्रीत्यर्थेज० ॥ शेषंपूर्ववत ॥ सायंप्रातश्चोपस्थानेविशेषमाहभगवान् ॥ नमोब्रह्मणइत्येवंत्रिरुक्तादिशोनमेत् ॥ इमंमेवरुणतत्त्वायामीतिसायांविशेषः ॥ संध्यामुपासतेयेतुसततंशंसितव्रताः ॥ विधूतपापास्तेयांतिब्रह्मलोकंस

नातनं ॥ संध्याहीनोऽशुचिर्नित्यमनर्हःसर्वकर्मसु ॥ यदन्यत्कुरुतेकर्मनतस्यफलभाग्भवेत् ॥ काम्यजपानाहाचार्यः ॥ ॥ वैष्णवैर्वारुणैःसौरैःपावमानीभिरेवच ॥ क्षपयेदाशुपापानिकामांश्चनिखिलान्लभेत् ॥ रौद्रैर्विशेषतोघोरान्ब्रह्महत्यादिकानापि ॥ क्षपयेत्पौरुषेणापिकामांश्चेच्छतिदुर्लभान् ॥ शतरुद्रेणजप्तेनचास्यवामीयकेनवा ॥ मोक्षमृच्छत्यसंदेहंकिमन्यदाधिकंततइति ॥ विष्णोर्नुकंजपेत्सूक्तंविष्णुरूपीभविष्यतीति ॥ गोभिलः ॥ संध्यायेननविज्ञातासंध्यायेनानुपासिता ॥ जीवमानोभवेच्छूद्रोमृतश्वाचाभिजायतइति ॥ मरीचिः ॥ सूतकेकर्मणांत्यागःसंध्यादीनांविधीयतेइति ॥ भरद्वाजः ॥ सूतकेमृतकेकुर्यात्प्राणायाममसंत्रकं ॥ तथामार्जनमंत्रास्तुमनसोच्चार्यमार्जयेत् ॥ गायत्रीसम्यगुच्चार्यसूर्यायार्घ्यंनिवेदयेत् ॥ मार्जनंतुनवाकार्यमुपस्थानंनचैवहीति ॥ आश्वलायनः ॥ आपन्नश्चाशुचिःकालेतिष्ठन्नापिजपेद्दशेति ॥ श्राद्धभोजिनासंध्याधिकारसिद्ध्येविशेषः ॥ दशकृत्वःपिबेदापोगायत्र्याश्राद्धभुग्द्विजः ॥ ततःसंध्यामुपासीतशुध्येच्चतदनंतरमिति ॥ स्नानकालजप्यविशेषमाहव्यासः ॥ द्रुपदानामगायत्रींवेदेवाजसनेयके ॥ सकृदंतर्जलेजप्त्वाब्रह्महत्यांव्यपोहतीति ॥ कारिकायां ॥ ॥ अन्यच्चाहरहःकृत्यंसंध्योपासनमुच्यते ॥ ग्रामाद्बहिरपांतीरेउपविश्यैवसद्विजः ॥ आचम्यमार्जनादन्यत्स्मृत्युक्तंचकरोत्यथ ॥ स्वशाखाविधिनाचैवसंध्याकर्मसमाचरेत् ॥ शौचाचारेतथापानेस्पृश्यस्पर्शेचचर्वणे ॥ पौराणाचमनंकुर्यान्नामभिःकेशवादिभिः ॥ गोकर्णाकृतिहस्तेनमाषमात्रंजलंपिबेत् ॥ तन्न्यूनमधिकंवापिसुरापानसमंभवेत् ॥ अंगुष्ठाग्रंसमाकुंच्यमध्यमामध्यपर्वणि ॥ गोकर्णंतंविजानीयात्सर्वेष्वाचमनेष्वपि ॥ स्मृत्यंतरे ॥ संहतांगुलिहस्तेनगृहीत्वाचांबुवीक्षितं ॥ मुक्तांगुष्ठक-

निष्ठाभ्यांत्रिःपिबेद्ब्रह्मतीर्थतः ॥ शीतलंनिर्मलंचांबुमधुरंक्षारवर्जितं ॥ ग्राह्यमाचमनेस्नानेदैवेपित्र्येचकर्मणि ॥ अथपुरा-
णाचमनं ॥ केशवाद्यैस्त्रिभिःपीत्वैकेनदक्षकरंमृजेत् ॥ द्वाभ्यामोष्ठौचसंमृज्यएकेनोन्मार्जयेच्चतौ ॥ जलमेकेनसंमंत्र्यैकेनवा
मकरंमृजेत् ॥ एकेनदक्षिणंपादंवाममेकेनचैवहि ॥ संप्रोक्ष्यैकेनमूर्धानमूर्ध्वोष्ठंनासिकाद्वयम् ॥ नेत्रयुग्मंकर्णयुग्मंदक्षिणो
पक्रमंक्रमात् ॥ नाभिंहृदयमूर्धानौदक्षवामभुजौस्पृशेत् ॥ प्रणवंपूर्वकन्नामचतुर्विंशतिसंख्यया ॥ स्वाहांतंप्राशयेद्वारिन-
मोंतंस्पर्शयेदथ ॥ संहतांगुलिभिस्तोयंगृहीत्वादक्षिणेनतु ॥ मुक्तांगुष्ठकनिष्ठेतुत्रिःपिबेद्ब्रह्मतीर्थतः ॥ प्रक्षाल्यहस्तौपीत्वा
थसकृदोष्ठावतःपरं ॥ संहतांगुष्ठमूलेनद्विःप्रमृज्यततोमुखं ॥ कृत्वाकरावभिमृशेत्संहतांगुलिभिर्जलं ॥ अद्भिर्वामकरेसिंच्य
ताभिःपादौचसंस्पृशेत् ॥ अंगुल्यग्रैस्त्रिभिर्मध्येउरस्योर्ध्वमुपस्पृशेत् ॥ मध्येमध्येजलंस्पृष्ट्वास्पृशेन्नासादिकान्क्रमात् ॥ अंगुष्ठे
नप्रदेशिन्याघ्राणंपश्चादुपस्पृशेत् ॥ अंगुष्ठानामिकाभ्यांचचक्षुःश्रोत्रंपृथक्पृथक् ॥ अंगुष्ठोपकनिष्ठाभ्यांनाभिपश्चादुपस्पृशे-
त् ॥ तलेनहृदयंस्पृष्ट्वास्पृशेदंगुलिभिःशिरः ॥ अंगुल्यग्रैर्दक्षिणादिबाहुमूलद्वयंस्पृशेत् ॥ अनेनविधिनाविप्रःकुर्यादाचमनं
सदा ॥ अथश्रुत्याचमनं ॥ देव्याःपादौस्त्रिभिःपीत्वाचाब्लिंगैर्नवभिःस्पृशेत् ॥ सप्तव्याहृतिभिश्चैवशिरोमंत्रैस्पृशेदथ ॥ आ
दावंतेचसंध्यायांद्विर्द्विराचमनंस्मृतं ॥ तथैवार्घ्यप्रदानांतेमध्येमध्येसकृत्सकृत् ॥ अथप्राणायामः ॥ दक्षिणेरेचकं
कुर्याद्वामेनापूरितोदरं ॥ कुंभकेनजपंकुर्यात्प्राणायामःसउच्यते ॥ पंचांगुलीभिर्नासाग्रेपीडनंप्रणवाभिधा ॥ मुद्रेयंसर्वपा
पघ्नीवानप्रस्थगृहस्थयोः ॥ कनिष्ठानामिकांगुष्ठैर्नासाग्रस्यचपीडनं ॥ ॐकारमुद्रासाप्रोक्तायतेश्चब्रह्मचारिणः ॥ याज्ञव

स्त्रयः ॥ गायत्रींशिरसासार्धंजपेद्व्याहृतिपूर्विकां ॥ त्रिःपठेदायतप्राणःप्राणायामःसउच्यते ॥ दशप्रणवसंयुक्तांगायत्रीं शिरसासह ॥ त्रिःपठेदा॰ ते ॥ संध्यायामर्घ्यदानेचप्राणायामैकउच्यते ॥ आदावंतेचगायत्र्याःप्राणायामास्त्रयःस्त्रयः ॥ ॥ अथमार्जनंकारिकायां ॥ अथसंध्यामुपासिष्यइतिसंकल्प्यमार्जयेत् ॥ तिसृभिर्मार्जनंकुर्यादापोहिष्ठाकुशोदकैः ॥ स्पृष्ट्वा हस्तेनवामेनतटंनद्यादिकंतुवा ॥ गृहेतुमार्जनंकुर्यान्नान्यथेसब्रवीन्मनुः ॥ अथार्घ्यदानं ॥ पाणिभ्यांजलमादायगायत्र्या- चाभिमंत्रितं ॥ रवेरभिमुखास्तिष्ठंस्त्रिरूर्ध्वंसंध्ययोःक्षिपेत् ॥ द्वौपादौतुसमौकुर्यात्पूरयेदुदकांजलिं ॥ गोशृंगमात्रमुत्क्षिप्यज लमध्येजलंक्षिपेत् ॥ कालातिक्रमणेयस्तुत्रिसंध्यामपिसर्वदा ॥ चतुरर्घ्यंप्रदातव्यंगायत्र्याशिरसासह ॥ प्रातर्माध्यान्हयोः संध्यांतिष्ठन्नेवसमापयेत् ॥ उपविश्यतुसायान्हेजलेत्वर्घ्यंननिक्षिपेत् ॥ पूर्वोत्तराशाभिमुखःप्रातःप्रयतमानसः ॥ जपंस्ति ष्ठेत्सावित्रींसंध्यांतंसकलांततः ॥ ऋष्यादिलक्षणंज्ञात्वारुद्रप्रोक्तेनमार्गतः ॥ न्यासंकुर्याद्द्विधानोक्तंषडंगंवाथशक्तितः ॥ ॥ शौनकः ॥ प्रातस्तिष्ठन्जपेद्देवींसायंचैवोपविश्यच ॥ उपविश्यतुमध्यान्हेजपकर्मसमारभेत् ॥ व्यासः ॥ प्रातर्मध्या न्हयोस्तिष्ठन्गायत्रीजपमारभेत् ॥ उर्ध्वजानुस्तुसायान्हेध्यानालोकनतत्परः ॥ आतारकोदयादेवप्रातःकर्मतदिष्यते ॥ अर्धा स्तमितनक्षत्रमंतरिक्षंयदाततः ॥ आरभ्यप्राङ्मुखस्तिष्ठन्जपन्नासूर्यदर्शनात् ॥ संध्यायाःसायमुत्पत्तिर्विज्ञेयाविबुधैःसदा ॥ ॥ शौनकः ॥ उपाकृतेहिकुर्वीतसायंसंध्यामुपक्रमादिति ॥ अथजपविधिः ॥ प्रातर्नाभौकरंकृत्वामध्यान्हेहृदिसंस्थितं ॥ ॥ सायंजपतिनासाग्रेजपस्तुत्रिविधःस्मृतः ॥ अंगुष्ठानामिकामूलप्रदक्षिणमतंद्रितः ॥ मध्यमामूलपर्यंतंगान्याजपईरितः ॥

॥ गायत्रीवेदमूलत्वाद्वेदःपर्वसुगीयते ॥ पर्वभिस्तुजपेद्देवीनमालाभिःकदाचन ॥ उष्णीषीकंचुकीनग्नोमुक्तकेशोगलावृतः ॥ अ
पवित्रकरश्चैवमलपन्नजपेत्क्वचित् ॥ ॐकारपूर्वमुच्चार्यव्याहृतीश्चततःपरं ॥ गायत्र्याप्रणवाद्यांतेजपएषउदाहृतः ॥ तिस्रो-
व्याहृतयःकुर्यात्पृथगोंकारसंयुताः ॥ पुनःसंहृत्यचोंकारंमंत्रस्याद्यंतयोस्ततः ॥ मानसःसिद्धिकामानांपुत्रकामउपांशुकः ॥
॥ वाचकोमारणेचैवप्रशस्तोजपईरितः ॥ वाचकस्त्वेकएवस्यादुपांशुशतमुच्यते ॥ सहस्रंमानसंप्रोक्तंमन्वत्रिभृगुनारदैः ॥
॥ शौनकः ॥ अष्टोत्तरशतंनित्यमष्टविंशतिसंख्यया ॥ विधिनादशकंवापित्रिकालंप्रजपेद्द्विजः ॥ अथप्रदोषेजपः ॥ अष्टा-
विंशत्यनध्यायेसुदिनेतुयथाक्रमं ॥ अथजपस्थानानि ॥ गृहेजपंसमंविद्याद्गोष्ठेशतगुणंभवेत् ॥ पुण्यारण्येतथारामेसहस्र
गुणितंविदुः ॥ अयुतंपर्वतारण्येनद्यांलक्षमुदाहृतं ॥ कोटिंदेवालयेप्राहुरनंतंविष्णुसंनिधौ ॥ सूर्यस्याग्रेगुरोरिंदोर्दीप-
स्यचजलस्यच ॥ विप्राणांचगवांचैवसंनिधौशस्यतेजपः ॥ अश्वत्थमूलमाश्रित्यजपहोमसुरार्चनं ॥ अक्षय्यंफलमाप्नोतिब्रा-
ह्मणोवचनंयथा ॥ अथनिषेधः ॥ पतितानांचान्त्यजानांदर्शनेभाषणेश्रुते ॥ क्षुतेऽधोवातगमनेजृंभणेजपमुत्सृजेत् ॥ प्रा-
प्तावाचम्यवैतेषांप्राणायामषडंगकं ॥ कृत्वासम्यग्जपेच्छेषंयद्वासूर्यादिदर्शनं ॥ अथसंध्योपस्थानं ॥ शौनकः ॥ सायंप्रात
रुपास्थानंकुर्यान्मंत्रैर्यथाक्रमं ॥ जातवेदसइत्येकातच्छंयोरावृणीमहे ॥ नमोब्रह्मणइत्येतैरुपतिष्ठेद्दिशंप्रति ॥ उत्तमेचानु-
वाकेनगायत्रींचविसर्जयेत् ॥ अथप्रसंगान्मध्यान्हसंध्योच्यते ॥ आचार्यः ॥ कुर्यान्मध्यान्हिकींसंध्यांब्रह्मयज्ञादनंतरं ॥
॥ संगवादूर्ध्वमित्याहुर्नचेदर्वागथापिवा ॥ विश्वामित्रः ॥ सकृदर्घ्यंतुमध्यान्हेप्रक्षिपेद्धंसइत्यृचा ॥ आकृष्णेनेतिमंत्रेण

गायत्र्यावेतिकेचन ॥ उपस्थानंतुमध्यान्हेकुर्यात्सूर्यस्यसंमुखः ॥ उदुत्यमितिवैचित्रंदेवानामित्यनेनच ॥ अथाभिवादनं ॥ आत्मपादौतथाभूमिंस्पृष्ट्वासंध्याभिवादनं ॥ नक्षत्रंचतथासूर्यंद्विजानप्यभिवादयेत् ॥ स्मृत्यर्थसारे ॥ ज्येष्ठंवाथकनिष्ठंवासंध्यांतेह्यभिवादयेत् ॥ वर्जयेत्तुसुतंशिष्यंदौहित्रंदुहितुःपतिं ॥ नारायणः ॥ नमेद्वेदमधीतारमिति ॥ अथवर्ज्यानाह॥वमंतंजृंभमाणंचकुर्वंतंदंतधावनं ॥ अभ्यक्तंक्षुरसंस्नानंकुर्वंतंनाभिवादयेत् ॥ दूरस्थंजलमध्यस्थंधावंतंमदगर्वितं ॥ उन्मत्तंबधिरंमूकमधंतंनाभिवादयेत् ॥ इतिधर्मप्रवृत्तौसंध्याविधिः ॥ दक्षः ॥ संध्याकर्मावसानेतुस्वयंहोमोविधीयतइति ॥ अशक्तंप्रतिसएवाह ॥ ऋत्विक्पुत्रोगुरुर्भ्राताभागिनेयोथविट्पतिः ॥ एतैरपिहुतंयत्स्यात्तद्धुतंस्वयमेवतु इति ॥ विट्पतिर्जामाता ॥ २ ॥ कात्यायनः ॥ असमक्षंतुदंपत्योर्होतव्यंनार्त्विगादिना ॥ द्वयोरप्यसमक्षंतुभवेद्धुतमनर्थकं ॥ उभयोःसंनिधानंतुमुख्यं ॥ एकतरंत्वनुकल्पः ॥ प्रातर्होमस्यकालमाहमनुः ॥ उदितेनुदितेचैवसमयाध्युषितेतथेति ॥ सायंहोमस्यकालमाहकात्यायनः ॥ यावत्सम्यङ्नभाव्यंतेनभस्यृक्षाणिसर्वतः ॥ लोहितत्वंचनापैतितावत्सायंतुहूयते ॥ संगवांतःप्रातःप्रदोषांतःसायमितिबौधायनः ॥ होमकालात्ययेतस्यपुनराधानमिष्यते ॥ याज्ञवल्क्यः ॥ कर्मस्मार्त्तंविवाहाग्नौकुर्वीतप्रत्यहंगृही ॥ यदाकालाहृतेवापिश्रौतंवैतानिकादिषु ॥ विष्णुः ॥ बहुशुष्केंधनेचाग्नौसुसमिद्धेहुताशने ॥ विधूमेलेलिहानेचहोतव्यंकर्मसिद्धये ॥ इतिसंग्रहेसायंप्रातर्होमविधिः ॥ अथधर्मप्रवृत्तौउपासनविधिः ॥ पाणिग्रहणादिगृह्यंपरिचरेदितिसूत्रं ॥ होमंकुर्यादनाशौचेप्यृत्विक्कर्तुरनुज्ञया ॥ यदिस्यात्सूतकंकर्तुःकुर्वीतानुज्ञयाविना ॥ अस्तमितेसायंजुहोत्यु-

दितेप्रातरितिब्राह्मणं ॥ कारिकायां ॥ अथयस्मिन्विवाहाग्निरुत्पन्नेहानितस्यतु ॥ यत्सायंतनमारभ्यवधुंपारिचरेत्स्वयं ॥ ॥ इत्युपासनस्यसायमारंभःसिद्धः ॥ उदितेजुहोतीतिप्रातश्रुतिः ॥ रेखामात्रश्चदृश्येतरश्मिभिश्चसमन्वितः ॥ उदितंतंविजानीयात्तत्रहोमोविधीयते ॥ संग्रहे ॥ अस्तादूर्ध्वंरविर्यावद्ध्रुवंहित्वानगच्छति ॥ तावदेवहिकालोयंप्रातस्तूदितहोमिनां ॥ प्रातर्द्वादशनाड्यस्तुसायंतुनवनाडिकाः ॥ होमकालःसमुद्दिष्टोमुनिभिस्तत्वदर्शिभिः ॥ अथस्थंडिलादिषु ॥ इषुमात्रावरं सर्वस्थंडिलमितिसूत्रं ॥ शौनकोपि ॥ चतुरस्रंचतुष्कोणंप्राचीदिक्प्रवणंतथा ॥ अरत्निमात्रंविज्ञेयंरश्मेरायतनंशुभं ॥ श्रौतमौपासनंवापिखातयोनिविवर्जितं ॥ मेखलाद्वितयंकार्यंरेखालग्नंतुबाह्यतः ॥ बाह्याषडंगुलोत्सेधाभ्यंतराद्वादशांगुला ॥ बाह्याद्व्यंगुलविस्ताराभ्यंतराचतुरंगुला ॥ औपासनंयत्सदनंतस्मादाहवनीयकं ॥ औपासनविधिःप्रोक्तःशौनकेनमहात्मना ॥ ॥ अन्यपक्षः ॥ नित्यहोमेतुकुंडंस्यान्मेखलात्रयसंयुतं ॥ भूमेरूर्ध्वंप्रकुर्वीतचतुर्विंशांगुलंशुभं ॥ मेखलाचोन्नताकार्यात्वेकैकाचतुरंगुला ॥ द्व्यंगुलाविस्तृतैकैकाखातंस्याद्द्वादशांगुलं ॥ शाकलः ॥ अग्निसंरक्षणेनित्यंयस्यशक्तिर्नविद्यते ॥ समिध्यारोपयेदग्निर्हस्तयोरथवापिच ॥ औपासनमकुर्वाणःश्वियंवाथोधिगच्छति ॥ स्वमातृगमनंप्रोक्तमितिशातातपोब्र० ॥ १ ॥ ॥ अथसमस्यहोमः ॥ कालद्वयेप्यशक्तश्चेदेकस्मिन्कालएववा ॥ प्रागेवोक्तेनाविधिनासमस्यःसायमाचरेत् ॥ समस्यंसायमारभ्यजुहुयात्सायमाहुतीः ॥ परिषिंच्याहुतीःप्रातर्हुत्वातंपरिषेचयेत् ॥ प्रियंगुर्व्रीहयःश्यामानीवाराश्चतथापयः ॥ यावनालाश्चगोधूमाउपासनशुभावहाः ॥ स्मृतिः ॥ अश्वत्थसमिधंवापिशमीसमिधमेववा ॥ तदभावेथवाचान्याःसमिधःप्रतपे

द्भवः ॥ पालाशःखादिरोश्वत्थःशम्यदुंबरजासमित् ॥ अपामार्गश्चदूर्वाचकुशाश्चेसपरोविदुः ॥ सत्वचःसमिधःकार्याऋजु
श्लक्ष्णाःसमास्तथा ॥ शस्तादशांगुलास्ताःस्युर्द्वादशांगुलिकास्तुवा ॥ षण्मासंतुशमीग्राह्याखादिरातुत्रिमासिकं ॥ मासत्र
यंतुपालाशोह्यश्वत्थोरहःस्मृतः ॥ दिनमेकमपामार्गोग्राह्याश्वार्कस्तथैवतु ॥ वटादयोपिकेचित् ॥ अकालेकृतंपारिजाते ॥
॥ अकालेयत्कृतंकर्मकालंप्राप्यपुनःक्रिया ॥ कालातीतंतुयत्कुर्यात्कृतंचापिहिकर्मतत् ॥ इत्युपासनविधिः ॥ अथसंग्रहेपं
चयज्ञाः ॥ पंचयज्ञान्प्रकुर्वीतविधिदृष्टेनकर्मणा ॥ वैश्वदेवात्क्षणातिथ्यमुद्धृतंचापिशक्तितइति ॥ अंगिराः ॥ यस्मिन्न
ग्नौपचेदन्नंतस्मिन्होमोविधीयतइति ॥ अत्रवैश्यदेवशब्देनदेवभूतपितृणांयज्ञास्त्रयउच्यंते ॥ होमोदेवयज्ञःबलिर्भूतयज्ञःस्वधा
कारः पितृयज्ञःएवंचतेनैवपितृयज्ञेसिद्धेनित्यश्राद्धार्थब्राह्मणभोजनंनावश्यकं ॥ अतएवदेवलस्तस्ययथाश्राद्धमनेककालतामह ॥
एतेनविधिनाश्राद्धंकुर्यात्संवत्सरंसकृत् ॥ त्रिश्चतुर्वायथाश्राद्धंमासिमासेदिनेदिनेति ॥ सचायंवैश्वदेवआत्मसंस्कारार्थोन्नसं
स्कारार्थश्च ॥ अहरहःकुर्वीतेतिवचनात् ॥ सिद्धस्यहविष्यस्येतिवचनात् ॥ शौनकः ॥ वैश्वदेवमपिप्रोक्तंपूर्वैरेवमनीषि
भिः ॥ अन्नस्यचात्मनश्चैवसंस्कारार्थंतदिष्यतइति ॥ तच्चसायंप्रातःकर्तव्यं ॥ उभयकरणासंभवे ॥ प्रातरेवद्विरावृत्त्याकुर्याद्वा
सहतद्विजः ॥ सायंवायदिवाभुंजीयात्तत्कृत्वाजात्वपिस्वयामिति ॥ व्यासः ॥ होमान्नदानरहितंनभोक्तव्यंकदाचन ॥ अवि-
भक्तेषुसंसृष्टमेकेनापिकृतंतुवा ॥ पयोमूलफलैर्वापिपंचयज्ञान्समाचरेदिति ॥ आश्वलायनः ॥ वसतामेकपाकेनविभक्ता
नामपिप्रभुः ॥ एकस्तुचतुरोयज्ञान्कुर्याद्वाग्यज्ञपूर्वकान् ॥ वाग्यज्ञोब्रह्मयज्ञः ॥ अविभक्ताविभक्ताश्चपृथक्पाकाद्विजातयः ॥

॥ कुर्युःपृथक्पृथक्यज्ञान्भोजनात्प्राक्दिनेदिने ॥ पृथगप्येकपाकानांब्रह्मयज्ञोद्विजन्मनां ॥ सूतकाद्यैस्त्वशुद्धात्मानकुर्यात्त्र
चकारयेदिति ॥ आपत्रमपिदातव्यमाकाष्ठमपिजुहुयादाऋचमपिब्रह्मयज्ञंकुर्यादितिवचनांतराच्चेति ॥ अलाभेयेनकेनापिफ
लशाकोदकादिभिः ॥ पयोदधिघृतैःकुर्याद्वैश्वदेवंसुत्रेणतु ॥ हस्तेनान्नादिभिःकुर्याद्दद्भिरंजलिनाजलइति ॥ शाकंवायदिवा
पत्रंमूलंवायदिवाफलं ॥ संकल्पयेद्यदाहारस्तेनैवजुहुयादपीति ॥ गृह्यपरिशिष्टे ॥ स्मृत्यंतरे ॥ कोद्रवंचणकंमाषंमसुरंचकुलित्थ
कं ॥ क्षारंचलवणंसर्वंवैश्वदेवेविवर्जयेत् ॥ परिशिष्टे ॥ उत्तानेनतुहस्तेनह्यंगुष्ठाग्रेणपीडितं ॥ संहतांगुलिपाणिस्तुवाग्यतोजु
हुयाद्धविरिति ॥ वृद्धवसिष्ठः ॥ अनग्निकस्तुयोविप्रःसोन्नंव्याहृतिभिःस्वयं ॥ हुत्वाशाकलमंत्रैश्चशिष्टंकाकबलिंहरेदिति ॥ पुत्रो
भ्रातातथाऋत्विक्शिष्यश्वशुरमातुलाः ॥ पत्नीश्रोत्रीययाज्याश्चदृष्टास्तुबलिकर्मणि ॥ अकृत्वावैश्वदेवंतुयोभुंक्तेनापदिद्विजः ॥
समूढोनरकंयातिपाशबद्धोह्यवाक्शिराः ॥ जुहुयात्सर्पिषाभ्यक्तंतैलक्षारविवर्जितं ॥ दध्यक्तंपायसाक्तंवातदभावेंभसापिवा ॥
नचुल्यांनायसेपात्रेनभूमौनचखर्परे ॥ वैश्वदेवंप्रकुर्वीतकुंडेवास्थंडिलेपिवा ॥ पंचयज्ञांस्तुयोमोहान्नकरोतिगृहाश्रमी ॥ तस्यना-
यंनचपरोलोकोभवतिधर्मतः ॥ इतिधर्मप्रवृत्तौवैश्वदेवकर्तव्यताविधिः ॥ अथवैश्वदेवः ॥ हविष्यंपक्वमादध्यादधिश्रित्यानलेच
तत् ॥ प्रोक्ष्योद्वास्यघृताभ्यक्तंह्यदिसव्यंनिधायच ॥ सिद्धान्नंचत्रिभिःप्रोक्ष्यतत्पात्रंपुरतस्थितं ॥ हविर्यदेकपात्रस्थंमध्येदेवंतथो
त्तरे ॥ भौतिकंपैत्रिकंयाम्यंमानुष्यचान्यपात्रके ॥ देवभूतपितॄणांचतत्तद्भागेनवैक्रमात् ॥ द्रवंहविःस्रुवेणैवपाणिनाकाठिनं
हविरिति ॥ वैश्वदेवंदिवानक्तंनभवेच्चेत्पृथक्पृथक् ॥ प्रातरेवद्विरावृत्त्याकर्तव्यंस्मृतिशासनात् ॥ सूर्यादिजुहात्पूर्वमग्न्यादि

भ्यस्ततःपरं ॥ हुत्वाव्याहृतिभिःपश्चाद्भूतयज्ञादिकंततः ॥ अथविभक्तवैश्वदेवः ॥ साग्नयोप्येकपाकास्युःपुत्रभ्रात्रादयो-
यादि ॥ नपृथग्वैश्वदेवाःस्युःस्वपाकान्निर्वपेद्यदि ॥ एकपाकेनवसतांपितृदेवद्विजार्चनं ॥ एकंभवेद्विभक्तानांतदेवस्यात्पृ
थक्पृथक् ॥ अनग्निकः ॥ साग्निकःपितृयज्ञांतेबलिकर्मसमाचरेत् ॥ अनग्निर्हुतशेषंतुबलिंकाकबलिंहरेत् ॥ सूतकेप्राज्यं ॥
॥ वैश्वदेवंतथाश्राद्धंब्रह्मयज्ञंचसूतके ॥ नकुर्यात्स्वयमन्यैश्चकारयेन्नतुसर्वथा ॥ स्मृत्यंतरे ॥ कुर्यात्पंचमहायज्ञानित्यशःसू-
तकंविना ॥ नित्यंनैमित्तिकंकाम्यंसूतकेपिनहापयेत् ॥ नित्यमौपासनं ॥ नैमित्तिकमुपरागस्नानादि ॥ काम्यं ॥ अश्वि
नेचंडीपूजनादिकंसर्वथानत्यजेत् ॥ अन्येनकारयेदित्यर्थः ॥ तथाच ॥ संध्यामिष्टिंचरुंहोमंयावज्जीवंसमाचरेत् ॥ नत्यजे
त्सूतकेवापित्यजनात्पतत्यधः ॥ नित्यंनैमित्तिकंकाम्यंयत्स्वकर्मप्रचोदितं ॥ सूतकादिनिमित्तेषुहावयेन्नतुहापयेत् ॥ सूत
केमृतकेचैवह्यशक्तोश्राद्धभोजने ॥ प्रवासादिनिमित्तेषुहावयेन्नतुहापयेत् ॥ सूतकेतुसमुत्पन्नेस्मार्तकर्मकथंभवेत् ॥ पिंडय
ज्ञंचरुंहोमममसगोत्रेणकारयेत् ॥ पिंडयज्ञंपिंडपितृयज्ञं ॥ स्थालीपाकमन्येनकारयेदित्यर्थः ॥ इतिवैश्वदेवप्रकरणं ॥ अथ
स्मृतिसंग्रहेब्रह्मयज्ञः ॥ बृहस्पतिः ॥ सचार्वाक्तर्पणात्कार्यःपश्चाद्वाप्रातराहुतेः ॥ वैश्वदेवावसानेवानान्यदर्थेनिमित्ततइति ॥
॥ सचमध्यान्हात्प्राक्कर्त्तव्यःप्रातराहुतेःपश्चादितिशाखांतरविषयं ॥ स्वगृह्यविधिनाकृत्वाब्रह्मयज्ञंपुराद्विजः ॥ स्वध्यायत
र्पणाभ्यांचगृहमेत्यपरंचरेत् ॥ ममसमस्तपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंपितृतुष्ट्यर्थंब्रह्मयज्ञेनसहदेवर्ष्याचार्यपितृतर्पणंचकरि
ष्येइतिसंकल्प्य ॥ प्रणवस्यपरब्रह्मऋषिः ॥ परमात्मादेवता ॥ दैवीगायत्रीछंदः ॥ व्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृ

हती ॥ गायत्र्याविश्वामित्रःसवितागायत्री ॥ अग्निमीळइतिनवर्चस्यसूक्तस्यमधुछंदाअग्निर्गायत्री ॥ नमोब्रह्मणइतिमंत्रस्यसंवननः संज्ञानमनुष्टुप् ॥ प्रणवव्याहृतिकांगायत्रींएकवारंपच्छः ॥ अर्धर्चशोद्वितीये ॥ ऋक्शस्तृतीये ॥ एवंत्रिवारंजपेत् ॥ अग्निर्मीळइतिनवर्चसूक्तं ॥ अग्निर्वैदेवानामवमोविष्णुःपरमः ॥ अथमहाव्रतं ॥ एषपंथाएतत्कर्म ॥ अथातःसंहितायाउपनिषत् ॥ विदामघवन्विदा ॥ महाव्रतस्यपंचविंशतिसामिधेन्यः ॥ इषेत्वोर्जेत्वा ॥ अग्नआयाहिवीतये ॥ शंनोदेवीरभिष्टये ॥ ॥ अथैतस्यसमाम्नायस्य ॥ समाम्नायःसमाम्नातः ॥ मयरसतजभनलगसंमितं ॥ गौःग्मा ॥ पंचसंवत्सरमयं ॥ अथशिक्षां प्रवक्ष्यामि ॥ वृद्धिरादैच् ॥ योगीश्वरंयाज्ञवल्क्यं ॥ नारायणंनमस्कृत्य ॥ अथातोधर्मव्याख्यास्यामः ॥ अथातोधर्मजिज्ञासा ॥ तच्छंयोरावृणीमहे ॥ नमोब्रह्मणइतित्रिः ॥ इतिब्रह्मयज्ञविधिः ॥ अथधर्मप्रवृत्तौब्रह्मयज्ञः ॥ यत्स्वाध्यायमधीतइतिसूत्रं ॥ स्मृतिः ॥ प्रातश्चेत्संगवादूर्ध्वंअंत्येवानियकर्मणि ॥ अथवावैश्वदेवांतेब्रह्मयज्ञस्त्रिधामतः ॥ इदंशाखांतरविषयं ॥ आश्वलायनानांशौनकः ॥ आवर्तनेऽवगृह्यापःकुशपाणिस्तुवव्हृचः ॥ ब्रह्मयज्ञंप्रकुर्वीतसंध्यामाध्यान्हिकींततः ॥ ॥ ॐपूर्वाव्याहृतीस्तिस्रःसमस्तास्तुसकृद्वदेत् ॥ पच्छस्त्वर्धर्चशःसर्वांसावित्रींत्रिर्वदेदथ ॥ शौनकः ॥ आचम्यवव्हृचाःकुर्युर्ब्रह्मयज्ञंचतर्पणं ॥ ततोनिष्पीड्यवस्त्रांतमुपवीतीसमाहरेत् ॥ अपांसमीपमागत्यतर्पयेदथदेवताः ॥ अन्वारब्धेनसव्येन दक्षिणेनतुपाणिना ॥ अथतिलतर्पणंस्मृत्यर्थसारे ॥ विवाहेचोपनयनेचौलेसतितथाक्रमं ॥ वर्षमर्धंतदर्धंतुनत्येकेतिलतर्पणं ॥ अर्केशुक्रेत्रयोदश्यांमघायांनिशिसंध्ययोः ॥ गृहेमृताहेजन्मर्क्षेनकुर्यात्तिलतर्पणं ॥ अथविशेषः ॥ पितृपक्षेव्यती-

पातेसंक्रांतौतिथिपर्वसु ॥ निषेद्धेपितथावारेकर्तव्यंतिलतर्पणं ॥ नद्यांतीर्थविशेषेतुप्रेतकार्येतथैवच ॥ कृतोद्वाहोपिकुर्वीत कर्तव्यंतिलसंयुतं ॥ व्यतीपातेतुसंक्रांतौयुगमन्वंतरादिषु ॥ तर्पयित्वापितॄन्पश्चाच्छ्राद्धंकुर्यात्प्रयत्नतः ॥ पक्षश्राद्धेहिरण्ये-चपश्चाद्दद्यात्तिलोदकं ॥ तथाचैवाष्टकाश्राद्धेश्राद्धेचैवानुमासिके ॥ कृत्वातुमासिकंश्राद्धंसपिंडीकरणात्परं ॥ वैश्वदेवंततःकुर्यात्तर्पणंतिलसंयुतं ॥ दर्शेतिलोदकंपूर्वंपश्चाद्दद्यान्महालये ॥ क्षयाहेनपरंपूर्वंतिलोदकंपरेहनि ॥ पक्षश्राद्धंतुनिर्वर्त्य तर्पणंस्याद्दिनेदिने ॥ सकृन्महालयेदद्यात्परेहनितिलोदकं ॥ वृद्धिश्राद्धेसपिंडेचप्रेतश्राद्धेतुमासिके ॥ परेहनिविमोकाख्ये नकुर्यात्तिलतर्पणं ॥ श्राद्धदिनेतर्पणं ॥ कपिलः ॥ मन्वादिषुयुगाद्यासुदर्शसंक्रमणेषुच ॥ पौर्णमास्यांव्यतीपातेदद्यात्पूर्वंतिलोदकं ॥ कारुण्यश्राद्धविषयेसद्योदद्यात्तिलोदकं ॥ अर्धोदयेगजच्छायेपक्षेषुचमहालये ॥ भरण्यांचमघाश्राद्धेतदंतेतर्पणंविदुः ॥ मातापित्रोर्मृताहेतुपरेहनितिलोदकं ॥ पित्रोःप्रत्याब्दिकेप्राप्तेतर्पणंतुकथंभवेत् ॥ जलेनैवप्रकर्तव्यंनिवृत्तेपितृकर्मणि ॥ श्राद्धंकृत्वातुविधिवद्वैश्वदेवादिकंततः ॥ ब्रह्मयज्ञंततःकुर्यात्तर्पणंतुतिलैर्विना ॥ हारीतः ॥ ततःपरेन्हिकुर्वीततर्पणंपुरुषःसुधीः ॥ तच्छेषैःस्तिलदर्भैश्चप्रातःस्नात्वामृतैर्जलैः ॥ जीवमानःपितायस्यमातायदिविपद्यते ॥ मातुःश्राद्धंसुतःकुर्यान्नकुर्यात्तिलतर्पणं ॥ इतिधर्मप्रवृत्तौशौचादितर्पणांतप्रकरणंसमाप्तं ॥ अथसंग्रहेतर्पणविधिः ॥ परिधानीयानंतरमेतादेवतास्तर्पयेत् ॥ प्रजापतिमारभ्यैकोनत्रिंशत् ॥ ताश्चयथायोग्यंतृप्यतुतृप्यतांतृप्यंत्वितिशब्दमुच्चार्यतर्पयेत् ॥ एवमंतानीतिपृथक्त्वात्रबोध्यः ॥ द्यावापृथिवीतृप्यतामितिप्रयोक्तव्यंनतुतृप्येतामिति ॥ तद्धिद्वेधास्यात् ॥ लोडात्मनेपदे ॥ लि-

ङ् परस्मैपदेवा ॥ नाद्यःधातोःपरस्मैपदित्वात् ॥ नाद्वितीयः ॥ शौनकादिभिर्लोडैवव्यवहारात् ॥ तृप्यतुतृप्यंत्विसादि सं
दर्भविरोधाच्चेतिदिक् ॥ एकैकमंजलिंदेवान्द्वौद्वौतुसनकादयः ॥ अर्हंतिपितरस्त्रींस्त्रींस्त्रियस्त्वेकैकमंजलिमिति ॥ सारसंग्रहे ॥
॥ अन्वारब्धेनसव्येनदक्षिणेनतुपाणिना ॥ सव्योत्तराभ्यांपाणिभ्यामथवातर्पणंभवेत् ॥ इदंचतर्पणंजलेनकार्यं ॥ शंखः ॥
उदकेनोदकंदद्यात्पितृभ्यश्चकदाचन ॥ उत्तीर्यचशुचौदेशेकुर्यादुदकतर्पणं ॥ दर्भास्तरणेविशेषः ॥ आग्नेये ॥ प्रागग्रे
षुसुरास्तर्प्यामनुष्याश्चैवमध्यतः ॥ पितरोदक्षिणाग्रेचएकाद्वित्रिसतांजलीनिति ॥ विष्णुः ॥ यत्रशुचिस्थलंवास्यादुदकेदेव
ताःपितुन् ॥ तर्पयेत्तुयथाकाममप्सुसर्वंप्रतिष्ठितामिति ॥ मरीचिः ॥ सौवर्णेनतुपात्रेणताम्ररौप्यमयेनवा ॥ औदुंबरेण
खड्गेणपितॄणांदत्तमक्षयमिति ॥ योगयाज्ञवल्क्यः ॥ अनामिक्यांधृतंहेमतर्जन्यांरौप्यमेवच ॥ कनिष्ठिक्यांधृतंखड्गंतेनपूतो
भवेन्नरइति ॥ स्मृतिभास्करे ॥ कुशाग्रैस्तर्पयेद्देवान्मनुष्यान्कुशमध्यतः ॥ द्विगुणीकृसमूलाग्रैःपितॄन्संतर्पयेद्विजइति ॥ तथा
चापितृक्रमः ॥ तातांबात्रितयंसपत्नजननीमातामहादित्रयंसास्त्रिस्त्रीतनयादितातजननीस्वभ्रातरस्तास्त्रियः ॥ तातांबात्मभ
गिन्यपत्यधवयुक्जायापितासद्गुरुःशिष्याप्ताःपितरोमहालयगयातीर्थेतथातर्पणे ॥ विस्तरासंभवेसंक्षेपतर्पणमुक्तंविष्णुपुराणे ॥
॥ आब्रह्मस्तंबपर्यंतंजगत्तृप्यत्विातिब्रुवन् ॥ क्षिपेत्तोयांजलींस्त्रींस्त्रीन्कुर्वन्संक्षेपतर्पणं ॥ जीवत्पितृकाविषयेविशेषमाह ॥ याज्ञव
ल्क्यः ॥ कव्यवाहोनलःसोमोयमश्चैवार्यमातथा ॥ अग्निष्वात्ताःसोमपाश्चतथाबर्हिषदोपिच ॥ यदिस्याज्जीवपितृकएता
न्विद्यात्ततःपितॄन् ॥ अत्रकव्यवाहंतर्पयामीतिप्रयोगः ॥ अकरणेप्रत्यवायःस्मर्यते ॥ देवताश्चमुनींश्चैवपितुन्योनाहितर्पयेत्॥

॥ देवादीनामृणीभूत्वानरकंप्रतिपद्यतइति ॥ अथयमतर्पणं ॥ वृद्धमनुः ॥ दीपोत्सवचतुर्दश्यांकार्यंतुयमतर्पणं ॥ कृष्णां गारचतुर्दश्यामपिकार्यंसदैवचेति ॥ स्मृतिचंद्रिकायां ॥ यमायधर्मराजायमृत्यवेचांतकायच ॥ वैवस्वतायकालायसर्वभू तक्षयायच ॥ औदुंबरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायतेनमः ॥ चतुर्दशैतेमंत्राःस्युश्चतुर्थ्यंता नमोंतकाः ॥ एकैकेनतिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलांजलीन् ॥ यावज्जीवकृतंपापंतत्क्षणादेवनश्यति ॥ स्कांदे ॥ दक्षिणा भिमुखोभूत्वातिलान्सव्येसमाहितः ॥ देवतीर्थेनदेवत्वात्तिलैःप्रेताधिपोयतः ॥ स्मृतिसारेतु ॥ यज्ञोपवीतिनाकार्यंप्राची नावीतिनापिवा ॥ देवत्वंचपितृत्वंचयमस्यास्तिद्विरूपता ॥ गौतमः ॥ यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः ॥ ॥ प्रेताधिपोदत्तकृतानुसारिकृतांतएतद्दशभिर्जपंति ॥ इतिदशवारंजपेत् ॥ अथभीष्मतर्पणं ॥ चंद्रिकायांव्यासः ॥ शुक्ला ष्टम्यांतुमाघस्यदद्याद्भीष्माययोजलं ॥ संवत्सरकृतंपापंतत्क्षणादेवनश्यति ॥ तत्रायंमंत्रः ॥ वैयाघ्रपादगोत्रायसांकृतिप्र वरायच ॥ गंगापुत्रायभीष्मायप्रदास्येहंतिलोदकं ॥ अपुत्रायददाम्येतत्सलिलंभीष्मतर्पणे ॥ ततोदर्भविसर्जनं ॥ विकि- रेपिंडदानेचेतिस्मरणात् ॥ तत्रैवमंत्रः ॥ एषांपिताचनभ्रातानपुत्रोनान्यगोत्रिणः ॥ तेसर्वेतृप्तिमायांतुमयोत्सृष्टैःकुशैस्त- थेति ॥ ततोवस्त्रंनिष्पीडयेत् ॥ तदाहशौनकः ॥ देवादितर्पणंकृत्वावस्त्रंनिष्पीड्यशोधयेत् ॥ स्नानार्थंप्रस्थितंविप्रंदे- वाःपितृगणैःसह ॥ वायुत्वेनानुगच्छंतितृषितास्तेजलार्थिनः ॥ निराशास्तुनिवर्ततेवस्त्रनिष्पीडनेकृते ॥ तस्मान्नपीडयेद्वस्त्र मकृतेतर्पणेद्विजइति ॥ निष्पीडनंचभूमौ ॥ भरद्वाजः ॥ वस्त्रोदकमपेक्षंतेयेमृतादासकर्मणा ॥ तस्मात्सर्वप्रयत्नेनजलं

भूमौनिपातयेत् ॥ इतिसंग्रहेतर्पणविधिः ॥ अथधर्मप्रवृत्तौदिवातीतकर्मणि ॥ नकृतानिप्रमादाच्चेत्प्रातःकर्माणिया-
निच ॥ रात्रावपिचकार्याणिविनासौरंचतर्पणं ॥ दिवोदितानिकर्माणिप्रमादादकृतानिवै ॥ रजनीप्रहरंयावत्तावत्कर्मा
णिकारयेत् ॥ केचिद्रात्रावपिब्रह्मयज्ञमिच्छंति ॥ अथदेवतार्चनविधिः ॥ नारायणंमहादेवमादित्यंगणनायकं ॥ शक्ति
चैवाथपंचैतान्प्रत्यहंपूजयेद्द्विजः ॥ अभिष्टदेवतांमध्येस्थापयेत्तांयथाक्रमं ॥ शंभौमध्यगतेहरीनहरभूदेव्योहरौशंकरेभास्येना
गसुतारवौहरगणेशाजांबिकास्थापिताः ॥ देव्यांविष्णुहरेभवक्त्ररवयोलंबोदरेजेश्वरेनांबाशंकरभागतोतिसुखदाव्यस्तास्तुते
हानिदाः ॥ पूज्यपूजकयोर्मध्येपूर्वादिगभिधीयते ॥ यस्मिन्विवस्वान्विपुवेत्युदेतिप्राचींतुतांवेदविदोवदंति ॥ मध्येपुन-
पूजकपूज्ययोश्चसदागमज्ञाःप्रवदंतिसंतः ॥ मुखेपुष्पांजलिंदत्वागणेशाद्यर्चनंभवेत् ॥ हेमराजतताम्राणांसर्वेषामर्घ्यभाजनं ॥
॥ शिवसूर्यौपरित्यज्यशंखोन्यत्रप्रशस्यतइति ॥ आवाहनासनंपाद्यमर्घ्यमाचमनंतथा ॥ स्नानंवस्त्रोपवीतानिगंधपुष्पैश्चधूप-
कं ॥ दीपंनैवेद्यतांबूलंप्रदक्षिणाविसर्जनं ॥ प्रत्यूचंपूजयेद्देवंस्नापयेत्पौरुषेणच ॥ शालग्रामेस्थावरेचनावाहनविसर्जनं ॥
॥ शालग्रामशिलायांतुनित्यंसंनिहितोहरिः ॥ चर्मण्यैष्टकआयासेपापाणेनोपवेशयेत् ॥ नांगुल्याश्चर्चयेद्देवंनाधःपुष्पैसमर्च
येत् ॥ कराग्रैर्निक्षिपेत्तोयंवज्रपातसमंभवेत् ॥ जलंपर्युषितंत्याज्यंपत्राणिकुसुमानिच ॥ तुलस्यगस्त्यबिल्वंचनवर्ज्यंजान्ह-
वीजलं ॥ अग्राह्यंशिवनिर्माल्यंपत्रंपुष्पंफलंजलं ॥ शालाग्रामस्यसंपर्कात्सर्वंयातिपवित्रतां ॥ इतिधर्मप्रवृत्तौदेवतार्चनवि
धिः ॥ अथसंग्रहेदेवतार्चनविधिः ॥ नृसिंहपुराणे ॥ जलदेवंनमस्कृत्यततोगच्छेद्गृहंबुधः ॥ पौरुषेणचसूक्तेनततोविष्णुं

समर्चयेदिति ॥ नांगुष्ठैर्मर्दयेद्देवंनाधःपुष्पैप्रपूजयेत् ॥ कराग्रैर्निक्षिपेत्तोयंवज्रपातसमंभवेत् कौर्मे ॥ ब्रह्माणंशंकरं सूर्यंतथैवमधुसूदनं ॥ अन्यांश्चाभिमतान्देवान्भक्त्यात्वक्रोधनोनरः ॥ स्वमंत्रैरर्चयेन्नित्यंपत्रैःपुष्पैस्तथांबुभिरिति ॥ स्कांदे ॥ ॥ कामासक्तोथवाक्रुद्धःशालग्रामशिलार्चनात् ॥ भक्त्यावायदिवाभक्त्याकलौमुक्तिमवाप्नुयात् ॥ वैवस्वतभयंनास्तितथाच कलिकालजं ॥ यःकथांकुरुतेविष्णोःशालग्रामशिलाग्रतः ॥ शालग्रामशिलायास्तुप्रतिष्ठानैवविद्यते ॥ महापूजांतुकृत्वा दौपूजयेत्तांततोबुधइति ॥ शिवपूजनमपिकलौलिंगेस्थंडिलेवाकार्यं ॥ तथाचभारते ॥ सदातंयजतेयस्तुश्रद्धयामुनिपुंग व ॥ लिंगेवास्थंडिलेवापिशंकरंविधिपूर्वकं ॥ युगदोषंविनिर्जित्यरुद्रलोकेप्रमोदतइति ॥ भविष्ये ॥ बाणलिंगानिरा जेंद्रख्यातानिभुवनत्रये ॥ नप्रतिष्ठानसंस्कारस्तेषामावाहनंतथेति ॥ विष्णुधर्मोत्तरे ॥ प्रणवोच्चारणाच्चैवशालग्रामशिलार्च नात् ॥ ब्राह्मणीगमनाच्चापिशूद्रश्चांडालतांव्रजेत् ॥ बृहन्नारदीये ॥ स्त्रीणामनुपनीतानांशूद्राणांचजनेश्वर ॥ स्पर्शनेना धिकारोस्तिविष्णोर्वाशंकरस्यवेति ॥ शूद्रोवाऽनुपनीतोवास्त्रीवापिपतितोथवा ॥ केशवंवाशिवंवापिस्पृष्ट्वानरकमश्नुतेइति ॥ ॥ पाद्मे ॥ ब्राह्मणक्षत्रवैश्यानांत्रयाणांमुनिसत्तम ॥ अधिकारःस्मृतःसद्भिःशालग्रामशिलार्चने ॥ स्त्रीशूद्रपतितादीनां षंढादीनांविकर्मिणां ॥ नैवाधिकारोविज्ञेयःशालग्रामशिलार्चने ॥ दीक्षायुक्तैस्तथाशूद्रैर्मद्यपानविवर्जितैः ॥ कर्त्तव्यंब्रा ह्मणद्वाराशालग्रामशिलार्चनमिति ॥ विष्णुधर्मोत्तरे ॥ कलौयच्छंतियेविष्णोस्तुलसीकाष्ठचंदनं ॥ विष्णुप्रीतिकरंमर्त्या उत्तरायांतितेध्रुवं ॥ योर्चयेन्मालतीपुष्पैर्नभूयस्तनपोभवेदिति ॥ स्कांदे ॥ कमलेकरवीरेद्रेतुलसीजातिकेतकी ॥ नाग

केसरपीरंतीकल्हारंचंपकोत्पले ॥ नंद्यावर्तंचजूतिश्चमल्लिकावनमल्लिका ॥ कुंदमंदारकंचैवसौधिकंचैवकेसरं ॥ कारंटका
शोकशजुंबिल्वंचमुनिपत्रकं ॥ पत्रमामलकंचैवयथालाभंसमर्चयेत् बिल्वविधानंविहितपुष्पाभावे ॥ नरक्तचंदनंजातुगृ-
ण्हीयाद्रक्तपुष्पकं ॥ बिल्वपत्रप्रसूनैर्वानार्चयेद्देवकीसुतं ॥ कार्तिकेकेतकीपुष्पंयेनदत्तंहरेःकलौ ॥ दीपदानंचदेवर्षेतारितं
तेनवैकुलं ॥ द्वारकाशैलसंभूतंयस्तोयंपिबतेकलौ ॥ पापानितस्यनश्यंतिशतजन्मार्जितान्यपि ॥ धृतेशिरसिपीतेचसर्वा
स्तुष्यंतिदेवताः ॥ प्रायश्चित्तंहिपापानांकलौपादोदकंहरेरिति ॥ आग्नेये ॥ अर्चनंसंप्रवक्ष्यामिविष्णोरमिततेजसः ॥ य-
त्कृत्वामुनयःसर्वेपरंनिर्वाणमाप्नुयुः ॥ पौरुषेणप्रकर्तव्यंनित्यंतुहरिपूजनं ॥ आसनाद्युपचारैस्तुयथाशक्त्यानुभावतः ॥ चत्वा
रोब्राह्मणैःपूज्यास्त्रयोराजन्यजातिभिः ॥ वैश्यैर्द्वावेवसंपूज्यौतथैकःशुद्रजातिभिरिति ॥ काम्येतु ॥ एकमूर्त्तिर्नपूज्यैवगृ
हिणाभूतिमिच्छिता ॥ अनेकमूर्तिसंपन्नःसर्वान्कामानवाप्नुयात् ॥ शालग्रामाःसमाःपूज्याविषमानकदाचन ॥ समेपुद्वित
यंनेष्टंविषमेष्वेकमेवहीति ॥ व्यासः ॥ प्रतिमापटयंत्राणांसदास्नानंनकारयेत् ॥ कारयेत्पर्वदिवसेयथामलनिवारणमि-
ति ॥ वस्त्रस्यनप्रतिदिनंअपूर्वतानियमः ॥ तत्वसागरसंहितायां ॥ वस्त्रमभ्युक्षणाच्छुध्येदपरंतुदिनेदिनइति ॥ कौर्मे ॥
॥ नविष्णवाराधनात्पुण्यंविद्यतेकर्मवैदिकं ॥ तस्मादनादिमध्यांतंनित्यमाराधयेद्धरिं ॥ अथवादेवमीशानंभगवंतंसनातनं ॥
॥ आराधयेन्महादेवंभावपूतोमहेश्वरं ॥ मंत्रेणरुद्रगायत्र्याप्रणवेनाथवापुनः ॥ ईशानेनाथवारुद्रंत्र्यंबकेनसमाहितः ॥ पु-
ष्पैःपत्रैःरथाद्भिर्वाचंदनाद्यैर्महेश्वरं ॥ तथोन्नमःशिवायेतिमंत्रेणानेनवाजपेत् ॥ नमस्कुर्यान्महादेवंऋतंसत्यमितीश्वरं ॥ निवे

दयीतचात्मानंयोब्रह्मणमितीश्वरे ॥ प्रदक्षिणांद्विजःकुर्यात्पंचब्रह्माणिवाजपेत् ॥ ध्यायीतदेवमीशानंव्योममध्यगतंशिव-
मिति ॥ शिवेकुंदंमदंतिचजूतीबंधूककेतकी ॥ यंवारक्तंत्रिसंध्येद्वेहयारींवर्वरींसजेत् ॥ घुसृणमपि ॥ अत्रविशेषोबौ-
धायनेद्रष्टव्यः ॥ देवीनांचार्कमंदारमादिसेतगरंतथा ॥ गणेशायचसूर्यायरक्तपुष्पमतिप्रियं ॥ कौर्मे ॥ योमोहादथवा
लस्यादकृत्वादेवतार्चनं ॥ भुंक्तेसयातिनरकंसूकरेष्वभिजायतइति ॥ अथगुरुपूजा ॥ मातापितृप्रभृतीन्गुरूननुक्रमेणाहे ॥
॥ तेष्वेवनित्यंशुश्रूषांकुर्यात्प्रियहितेरतइति ॥ शैवे ॥ वस्त्राभरणमाल्यानिशयनान्यासनानिच ॥ प्रियाणिचात्मनोया-
नितानिदेयानिवैगुरोरिति ॥ अथपंचभागकृत्यं ॥ नृसिंहे ॥ पौरुषेणचसूक्तेनततोविष्णुंसमर्चयेत् ॥ वैश्वदेवंततःकुर्या
द्बलिकर्मतथैवचेति ॥ शातातपः ॥ वैश्वदेवःप्रकर्त्तव्यःपंचसूनापनुत्तयेइति ॥ अथसायंप्रातरितिसूत्रं ॥ अस्यार्थः ॥
॥ सायंशब्दोरात्रेर्लक्षकः ॥ प्रातःशब्दश्चान्होलक्षकः ॥ सिद्धस्य पक्वस्य ॥ होममंत्रानाह ॥ अग्निहोत्रेत्यादि ॥ साय
मग्निः ॥ प्रातःसूर्यःप्रजापतिरुभयत्रेत्यर्थः ॥ सोमायवनस्पतयेइत्येकाआहुतिः ॥ अग्निर्गृहपतिः ॥ सोमोवनस्पतिरिति ॥
आदौवनस्पतेर्गुणत्वेनदृष्टत्वात् ॥ विश्वेभ्योदेवेभ्यइतिचैकाआहुतिः ॥ तदेवंब्रह्मणइतिदशमीआहुतिः ॥ एतावान्देवयज्ञः ॥
॥ भूतयज्ञमाह ॥ स्वाहेत्यथबलिहरणमाहयागत्वादेवस्वाहाकारेलब्धेस्वाहाकारवचनमन्यत्रबलौस्वाहाकारविरहज्ञापनार्थंते
नचैत्यबलौनमस्कारएवभवति ॥ अथशब्दअनंतर्येदेवयज्ञाव्यवहितकालोत्तरेत्यर्थः ॥ एताभ्यःपूर्वोक्ताभ्योदशभ्यश्चकरोव-
क्ष्यमाणानांसमुच्चये ॥ एवकारस्तुपौनर्वचिनकः ॥ इंद्रपुरुषेभ्यइतींद्रादुत्तरतइदंबोध्यं ॥ उदगैंद्राद्बलेरिंद्रपुरुषेभ्योबलि

हरेदितिकारिकोक्तेः ॥ एवंयमपुरुषादिबलिरपिप्रधानादुदग्बोध्यः ॥ ब्रह्मणइति ॥ एताभ्यइतिशब्देनोपात्तासुदशसुदेवतास्वप्यंतेब्रह्मणइतियाआहुतिस्तस्याअनंतरंकिंचिदंतरालंमुत्काअद्भ्यइत्यादयोहोतव्याः ॥ यत्तुअंतरालंतत्रब्रह्मणइत्यादिदिग्देवतामध्येजुहुयादित्यर्थः ॥ विश्वेभ्योदेवेभ्यःस्वाहा ॥ सर्वेभ्योभूतेभ्यःस्वाहा ॥ दिवाचारिभ्यःस्वाहेत्येतदपिमध्यतएवबोध्यं॥ दिवेति ॥ अनेनवैश्वदेवस्यप्रातरेवारंभोनतुअग्निहोत्रादिवत्सायमितिसूचयति ॥ अन्यथासायंप्रातरित्युपक्रमानुरूपमेवनिर्दिशेत् ॥ उत्तरतइति ॥ सर्वासामुत्तरतइत्यर्थः ॥ इतिभूतयज्ञः ॥ पितृयज्ञमाह ॥ स्वधेति शेषग्रहणादानंतर्यलाभः ॥ दक्षिणादक्षिणस्यांदिशि ॥ स्वधापितृभ्यः ॥ इतिपितृयज्ञः ॥ इदंचयज्ञत्रयंवैश्वदेवइत्युच्यते ॥ अत्रकारिका ॥ ॥ गृहस्थोवैश्वदेवाख्यंकर्मप्रारभतेदिवा ॥ तंत्रंनास्त्यत्रभगवद्वृत्तिकृद्वचनंयथा ॥ औपासनाग्निमन्यंवासमिध्याथहविर्भुजं ॥ ॥ पर्युह्यपरिषिच्याग्निमलंकृत्यचपूर्ववदित्यादि ॥ बलिहरणंचक्रकारंकुर्यादिति ॥ पंचस्वेतेषुविप्राणांमुख्याचक्राकृतिर्भवेत् ॥ चक्राकारेणयोविप्रःसदाभूतबलिंहरेत् ॥ सर्वपापविनिर्मुक्तोविष्णोःसायुज्यमाप्नुयादिति ॥ शौनकः ॥ अथगृहबलिः ॥ तद्गृह्यपरिशिष्टे ॥ अथास्यशेषेणगृहदेवताबलिर्द्वारेपितामहायप्रक्रीळेरुद्रायगृहप्राच्यादिप्रतिदिशंसनवग्रहायेंद्रायबलभद्राययमविष्णुभ्यांस्कंदवरुणाभ्यां सोमसूर्याभ्यामश्विभ्यांवसुभ्योनक्षत्रेभ्योऽथमध्येवास्तोष्पतयेप्रागादिभित्तिमूलेषुसिध्यैवृध्यैश्रियैकीर्त्यैवरुणायोदधानेऽश्विभ्यांदृषदुपलयोर्द्यावापृथिवीभ्यामुलूखलमुसलयोरथनिष्क्रम्यभूमावपआसिच्यचांडालपतितभूतवायसेभ्योन्नंभूमौविकिरेद्येभूताःप्रचरंतिदिवानक्तंबलिमिच्छंतोविदुरस्यप्रेष्ठाः ॥ तेभ्योबलिंपुष्टिकामोददामिमयिपुष्टिंपुष्टिप

तिर्ददात्विातिरात्रौचेन्नक्तंबलिमितिब्रूयादथप्रक्षालितपाणिपादआचम्यशांतापृथिवीशिवमंतरिक्षमितिजपित्वान्यानिचस्वस्त्य
यनानि ॥ ततोमनुष्ययज्ञपूर्वकंभुजीतेति ॥ अथविशेषमाह ॥ शौनकः ॥ देवयज्ञान्नशेषंतद्गृहद्वारादिषुक्षि-
पेत् ॥ चंडालपतितादिभ्योभूतयज्ञान्नशेषतः ॥ पितृयज्ञान्नशेषेणवायसेभ्योबलिंहरेत् ॥ प्रक्षालितांघ्रिपाणिस्तु
त्वाचम्यप्रविशेद्गृहमिति ॥ इतिसंग्रहेदेवतार्चनादिप्रकरणं ॥ अथसंग्रहेमनुष्ययज्ञः ॥ मनुः ॥ अतिथिभ्योन्नदानंतुनृ
यज्ञःसतुपंचमइति ॥ ब्राह्मणभोजनपर्याप्तान्नशक्त्यभावेऽनुकल्पःस्मर्यते ॥ कौर्मे ॥ हंतकारमथाग्रंवाभिक्षांवाशक्तितोद्विजः ॥
॥ दद्यादतिथयेनित्यंबुध्येतपरमेश्वरमिति ॥ अतिथिंपरमेश्वरबुध्यापूजयेदितिभावः ॥ भिक्षादिलक्षणमनुराह ॥
॥ ग्रासमात्रंभवेद्भिक्षाअग्रंग्रासचतुष्टयं ॥ चतुर्गुणंतुतत्कृत्यहंतकारोविधीयतइति ॥ अतिथिनिरीक्षणायकिंचित्कालंगृहांग
णेतिष्ठेत् ॥ उक्तंचमार्कंडेये ॥ आचम्यचततःकुर्यात्प्राज्ञोद्वारावलोकनं ॥ मुहूर्तस्याष्टमंभागमुद्वीक्ष्योह्यतिथिर्भवेत् ॥
॥ नमित्रमतिथिंकुर्यान्नैकग्रामनिवासिनं ॥ अज्ञातकुलनामानंतत्कालेसमुपस्थितं ॥ बुभुक्षुमागतंश्रांतंयाचमानमकिंचन ॥ ब्रा
ह्मणंप्राहुरतिथिंसंपूज्यःशक्तितोबुधैरिति ॥ पराशरः ॥ दद्याच्चभिक्षात्रितयंपरिव्राड्ब्रह्मचारिणं ॥ इच्छायाचततोदद्या
द्विभवेसत्यवारितमिति ॥ मूलकारः ॥ अन्यांश्चतर्पयेत्सर्वाननाथांश्चतपस्विनः ॥ पक्षिणश्चैवचांडालान्पतितान्कृमिकीटका
निति ॥ व्यासः ॥ पंचयज्ञांस्तुयोमोहान्नकरोतिगृहाश्रमी ॥ तस्यनायंनचपरोलोकोभवतिधर्मतइति ॥ अथाहगौतमः ॥
कंडणीपेषणीचुल्लीउदकुंभीचमार्जनी ॥ पंचसूनागृहस्थस्यवर्ततेहन्यहन्यपि ॥ पयोदधिघृतैःकुर्यात्फलशाकोदकादिभिः ॥

॥ अभावेयेनकेनापिकाष्ठमूलतृणादिना ॥ शाकंवायादिवापत्रंमूलंवायदिवाफलं ॥ संकल्पयेद्यदाहारस्तेनाग्नौजुहुयादपि ॥
॥ अकृत्वावैश्वदेवंतुभिक्षौभिक्षार्थमागते ॥ उध्दृत्यवैश्वदेवार्थंभिक्षांदत्वाविसर्जयेत् ॥ वैश्वदेवकृतंदोषंशक्तोभिक्षुर्व्यपोहति ॥
॥ नतुभिक्षुकृतंदोषंवैश्वदेवोव्यपोहति ॥ यतिश्चब्रह्मचारीचपक्कान्नस्वामिनावुभौ ॥ तयोरन्नमदत्वातुभुक्त्वाचांद्रायणंचरेत् ॥
॥ इतिसंग्रहेपंचयज्ञादिप्रकरणं ॥ अथसंग्रहेनित्यश्राद्धविधिः ॥ निरंशाकैःफलैर्वापियेनवावर्ततेस्वयं ॥ तेनैवभोजयेद्वि-
प्रंनित्यश्राद्धंतुकारयेत् ॥ एकंतुभोजयेद्विप्रंपित्र्यर्थंपंचयाज्ञिके ॥ तच्चषट्पौरुषंज्ञेयंपिंडदानविवर्जितं ॥ अतिथिर्यस्यभग्ना-
शोगृहात्प्रतिनिवर्तते ॥ सतस्यदुष्कृतंदत्वापुण्यमादायगच्छति ॥ मातापितागुरुर्भ्राताप्रजादीनःसमाश्रितः ॥ अभ्याग
तोतिथिश्चाग्निःपोष्यवर्गउदाहृतः ॥ इतिसंग्रहेनित्यश्राद्धविधिः ॥ अथधर्मप्रवृत्तौनित्यश्राद्धविधिः ॥ याज्ञवल्क्यः ॥
॥ नित्यश्राद्धंदैवहीनंनियमादिविवर्जितं ॥ दक्षिणारहितंचैवदातृभोक्तृविवर्जितं ॥ आवाहनंस्वधाकारंपिंडाग्नौकरणादिकं॥
॥ ब्रह्मचर्यादिनियमान्विश्वेदेवास्तथैवच ॥ नित्यश्राद्धेत्यजेद्दाताभोज्यमन्नंप्रकल्पयेत् ॥ भोक्त्रभावेतथान्नंवागोभ्यश्चैवानिवे
दयेत् ॥ षड्दैवसंभवेच्छ्राद्धंकर्तव्यंप्रत्यहंद्विजैः ॥ नित्यकर्मसमाप्याथब्राह्मणःश्रद्धयान्वितः ॥ अपसव्येनकर्तव्यंनित्यश्रा-
द्धमदैवतं ॥ पितॄनुद्दिश्यविप्रस्यभोक्तुमभ्यागतस्यच ॥ पादप्रक्षालनंकुर्यान्नामगोत्रंसमुच्चरेत् ॥ संभोज्यातिथिभृत्यांश्च-
दंपत्योःशेषभोजनं ॥ चित्राहुतिप्रदानांतंकृत्वाभोजनमाचरेत् ॥ सपंक्तौब्राह्मणस्यापिभुंजीयात्सहबंधुभिः ॥ इतिधर्मप्रवृ
त्तौनित्यश्राद्धविधिः ॥ संग्रहेभोजनविधिः ॥ मनुः ॥ भुक्तवत्सुतुविप्रेषुस्वेषुभृत्येषुचैवहि ॥ भुंजीयातांततःपश्चादवशि

ष्टंतुदंपती ॥ पवित्रंविष्णुनैवेद्यंसुरसिद्धर्षिभिःस्मृतं ॥ अन्यदेवस्यनैवेद्यंभुक्त्वाचांद्रायणंचरेत् ॥ अग्राह्यंशिवनिर्माल्यंपत्रंपु-
ष्पंफलंजलं ॥ शालग्रामशिलास्पर्शात्सर्वंयातिपवित्रतां ॥ भोजनेइतिकर्तव्यतामाहबौधायनः ॥ उपलिप्तेसमेस्थानेशुचौ
श्लक्ष्णासमन्विते ॥ चतुरस्रंत्रिकोणंवावर्तुलंचार्धचंद्रकं ॥ कर्तव्यमानुपूर्व्येणब्राह्मणादिपुमंडलं ॥ व्यासः ॥ पंचार्द्रोभोजनं
कुर्यात्प्राङ्मुखोमौनमास्थितः ॥ हस्तौपादौतथैवास्यमेषुपंचार्द्रतामतेति ॥ अश्वमेधिके ॥ आर्द्रपादस्तुभुंजीयात्प्राङ्मुख
आसनेशुभे ॥ पादाभ्यांधरणींस्पृष्ट्वापादेनैकेनवापुनरिति ॥ आयुष्मान्प्राङ्मुखोभुंक्तेनकदाचिदुदङ्मुखः ॥ प्रत्यङ्मुखः
सदाश्नीयाद्यशश्चीदक्षिणामुखः ॥ अर्कद्विपर्वरात्रौचचतुर्दश्यष्टमीदिवा ॥ एकादश्यामहोरात्रौभुक्त्वाचांद्रायणंचरेत् ॥
॥ इतिपैठिनसिः ॥ सौवर्णेराजतेताम्रेपद्मपत्रपलाशयोः ॥ भाजनेभोजनंकुर्वन्त्रिरात्रंफलमश्नुते ॥ एकएवतुयोभुंक्तेविम
लेकांस्यभोजने ॥ चत्वारितस्यवर्धंतेआयुःप्रज्ञायशोबलमिति ॥ पद्मपलाशभोजनंगृहीव्यतिरिक्तविषयं ॥ ग्रहस्थस्यनिषिद्धत्वा
त् ॥ वृद्धमनुः ॥ ताम्रपात्रेनभुंजीतभिन्नकांस्येमलाविले ॥ पलाशपद्मपत्रेषुगृहीभुक्त्वैंदवंचरेत् ॥ पलाशोवल्लिपलाशः॥
॥ कांस्यपात्रंगृहस्थैकविषयं ॥ करेचकर्पटेचैवआयसेताम्रभाजने ॥ वटार्काश्वत्थपत्रेषुभुक्त्वाचांद्रायणंचरेत् ॥ सर्वपर्णेषु
भुंजीयादेरंडेनकदाचन ॥ एरंडेपिचभुंजीयात्परकांस्यंविवर्जयेत् ॥ परकांस्येतुभुंजीयात्तुल्यंगोमांसभक्षणं ॥ प्रचेताः ॥
॥ तांबूलाभ्यंजनंचैवकांस्यपात्रेचभोजनं ॥ यतिश्चब्रह्मचारीचविधवाचविवर्जयेत् ॥ तत्प्राणाहुतिपर्यंतंभूमौस्थाप्यपश्चातुयं
त्रिकायां ॥ तदाहव्यासः ॥ न्यस्तपात्रस्तुभुंजीतपंचग्रासान्महामुने ॥ शेषमुद्धृत्यभोक्तव्यंपित्र्यर्थेतुनचोद्धरेत् ॥ इत्युद्धृत्य-

यंत्रादापात्रंनिक्षिप्येसर्थः ॥ पित्र्यर्थेतुभोजनेनुभूमौपत्रस्छापनमावश्यकं ॥ पित्र्यर्थेतुनचोद्धरेदितिवचनात् ॥ पित्र्येकर्म
णिभुंजानोभूमौपात्रंनचालयेत्इति ॥ ब्राह्मे ॥ अन्नंदृष्ट्वाप्रणम्यादौप्रांजलिःकथयेत्ततः ॥ अस्माकंनित्यमस्त्वेतदितिभ-
क्त्याथवंदयेत् ॥ गोभिलः ॥ अथप्राणाहुतिकल्पः ॥ व्याहृतिगायत्र्याभिमंत्र्य ॥ सत्यंत्वर्त्तेनपरिषिंचामीतिप्रातः ॥
ऋतंत्वासत्येनेतिसायं ॥ भविष्ये ॥ उध्दृत्यार्किंचिदन्नाग्रंधर्मराजायवैबलिं ॥ दत्वाथचित्रगुप्तायप्रेतेभ्यश्चेदमुत्सृजेत् ॥ यत्रक्कचन
संस्छानांक्षुत्तृष्णोपहतात्मनां ॥ प्रेतानांतृप्तयेक्षय्यमिदमस्तुयथासुखमिति ॥ दत्वातुचित्रगुप्तायहस्तंप्रक्षालयेद्द्विजः॥ अक्षालित
करोभुंक्तेरौरवंनरकंव्रजेत् ॥ यस्तुजल्पतिभुंजानोविवादेषुकथासुच ॥ अघंसकेवलंभुंक्तेतस्मान्मौनंसमाचरेत् ॥ जिव्हयेवग्रहेदन्नं
दशनेननसंस्पृशेत् ॥ यथारसंतुजानातिजिव्हाप्राणाहुतौनृप ॥ तथासमाहितःकुर्यात्प्राणाहुतिमतंद्रितइति ॥ अश्नीयात्तन्म
नाभूत्वाभुंजीतमधुरंरसं ॥ लवणाम्लौतथामध्येकुटतिक्तादिकांस्ततः ॥ प्राग्द्रवंपुरुषोश्नीयान्मध्येचकठिनाशनः ॥ अंतःपु
नर्द्रवाशीतुबलारोग्येनमुंचाति ॥ अष्टौग्रासायतेर्भक्ष्याःषोडशारण्यवासिनः ॥ द्वात्रिंशत्तुगृहस्छस्यत्वमितंब्रह्मचारिणः ॥
॥ इति ॥ आश्वमेधे ॥ वक्त्रप्रमाणपिंडांश्चग्रसेदेकैकशःपुनः ॥ वक्त्राधिकस्तुयःपिंडआत्मोच्छिष्टंतदुच्यते ॥ सदावासश
नंनाद्यान्नातिहिनंतुकर्हिचित् ॥ यथान्नेनव्यथानस्यात्तथाभुंजीतनित्यशः ॥ वृद्धमनुः ॥ पत्वापोशनमश्नीयात्पात्रदत्तमग
र्हितं ॥ भार्याभृत्यकदासेभ्यउच्छिष्टंशेषयेत्ततइति ॥ उच्छिष्टशेषंघृतादिव्यतिरिक्तविषयं ॥ पुलस्त्यः ॥ भोजनंतुननिःशे-
षंकुर्यात्प्राज्ञःकथंचनं ॥ अन्यत्रदधिसक्ताज्यपललक्षीरमध्वपइति ॥ एतच्चभोजनंसायंप्रातःकार्यं ॥ मनुः ॥ सायंप्रातर्द्वि

जातीनामशनंश्रुतिचोदितं ॥ नांतराभोजनंकुर्यादग्निहोत्रसमोविधिःरिति ॥ अत्रसायंप्रातर्भुंजीतैव ॥ इतिनियम
विधिः ॥ तेनसतिभोज्येसत्यांचभोजनशक्तौद्वेषादिनाभोजनमकुर्वन्प्रत्यवैतीतिमिताक्षरायांविज्ञानेश्वरः ॥ हरदत्तस्तुसा-
यंप्रातरेवेतिपरिसंख्या ॥ साचयद्यपिदोषंजयतितथापिएकवाक्यतालोभात्सोढव्या ॥ यश्चपाणितलेभुंक्तेयश्चभुं-
क्तारसंयुतं ॥ प्रसुतांगुलिभिर्यश्चतस्यगोमांसवच्चतत् ॥ नाजीर्णेभोजनंकुर्यात्कुर्यान्नातिबुभुक्षितः ॥ नार्द्रवासानार्द्रशि
रादेवालयगतोपिवा ॥ नप्रसारितपादस्तुपादारोपितपाणिमान् ॥ नवेष्टितशिराश्चापिनोत्संगकृतभाजनः ॥ ग्रासशेषंच
नाश्नीयात्पीतशेषंपिबेन्नच ॥ शाकमूलफलेक्षूणांदंतच्छेदेनभक्षयेत् ॥ बहूनांभुंजतांमध्येनाश्नीयाच्चत्वरान्वितः ॥ वृथान-
विकिरेदन्नंनोच्छिष्टश्चक्वचिद्व्रजेत् ॥ बृहस्पतिः ॥ नस्पृशेद्वामहस्तेनभुंजानोन्नंकदाचन ॥ नपादौनशिरोबस्तिंनपदाभा
जनंस्पृशेदिति ॥ आदित्ये ॥ नोच्छिष्टंग्राहयेदाज्यंजगृध्वाशिष्टंनसंसृजेत् ॥ शूद्रभुक्तावशिष्टंतुनाद्याद्भांडस्थितंत्वपीति ॥
कौर्मे ॥ नार्धरात्रेनमध्यान्हेनाजीर्णेनार्द्रवस्त्रधृक् ॥ नभिन्नभांजनेचैवनभूम्यांनचपाणिषु ॥ नोच्छिष्टोघृतमादद्यान्नमूर्धा
नंस्पृशन्नपि ॥ नब्रह्मकीर्तयित्वापिनानिःशेषंनभार्यया ॥ नांगणेचनचाकाशेनचदेवालयादिपुइति ॥ सर्वेषामेवयागाना-
मात्मयागःपरःस्मृतः ॥ योयेनविधिनाकुर्यात्सयातिब्रह्मणःपदमिति ॥ आत्रिः ॥ आचांतोप्यशुचिस्तावद्यावत्पात्रमनु
द्धृतं ॥ उद्धृतेप्यशुचिस्तावद्यावन्नोमृज्यतेमही ॥ भूमावपिहिलिप्तायांतावत्स्यादशुचिःपुमान् ॥ आसनादुत्थितस्तस्मःद्यावन्न
स्पृशतेमहीमिति ॥ संग्रहेभोजनविधिः ॥ स्मृतिसारसमुच्चये ॥ प्राङ्मुखस्तुसमश्नीयात्प्रतीच्यांवायथासुखं ॥ उत्तरेपितृकुसे

पुदक्षिणेतुयथासुखं ॥ अथभोजनेमंडलं ॥ बौधायनः ॥ चतुरस्रंत्रिकोणंचवर्तुलंचार्धचंद्रकं ॥ कर्तव्यमानुपूर्व्येणमंडलं ब्राह्मणादिषु ॥ अथकांस्यपात्रं ॥ एकएवतुयोभुंक्तेविमलेकांस्यभाजने ॥ चत्वारस्तस्यवर्धंतेआयुःप्रज्ञायशोबलं ॥ पार णाहेतथाश्राद्धेवर्जयेत्कांस्यभाजनं ॥ मोहाद्योयदिभुंजीतकृतंकर्मचनिष्फलं ॥ भोजनेपत्राणि ॥ रंभाकुटजमध्वाम्रजंबूप नसचंपकाः ॥ यज्ञोदुंबरपालाशब्रह्मपत्रपवित्रकं ॥ निषिद्धानि ॥ वटाश्वत्थार्कपर्णेषुकुंभीतिंदुकपर्णयोः ॥ कोविदार कदंबानांभुक्त्वाचांद्रायणंचरेत् ॥ करेचकर्पटेचैवशिलायांताम्रभाजने ॥ भिन्नकांस्येचवल्लेचनभुंजीयात्तथायसे ॥ शाका दिपुरतःस्थाप्यमध्येन्नंपरिवेषयेत् ॥ परिशिष्टंचगायत्र्याघृताक्तमभिमंत्रयेत् ॥ अन्नंमध्येप्रतिष्ठाप्यदक्षिणेघृतपायसं ॥ शा- कादिपुरतस्थाप्यभक्ष्यभोज्यंतुवामतः ॥ पात्रंधृत्वातुवामेनयावत्स्याद्भोजनंहितत् ॥ पाणिनादक्षिणेनैवपर्युक्ष्यपरिषेचयेत् ॥ ॥ स्मृतिः ॥ बदरीफलमात्रान्नमंगुल्यग्रैर्भुविक्षिपेत् ॥ यमधर्मायचित्रायभूतेभ्यश्चततोजलं ॥ मनुः ॥ चित्राहुतीरनुध्दृ त्यभुंक्तेयोग्रासपंचकं ॥ अघंसकेवलंभुंक्तेज्ञानतोज्ञानतोपिवा ॥ अपोशानमकृत्वातुयोभुंक्तेद्विजसत्तमः ॥ अभोज्यंतद्भवे दन्नंभुक्त्वाचांद्रायणंचरेत् ॥ मनुः ॥ आपोशनंकरेकृत्वापात्रेकृत्वातिलोदकं ॥ श्वानमूत्रसमंतोयंपुनःपूरयतेयदि ॥ आ- पोशनार्थयत्तोयंधृतंचेन्निःसृतंयदि ॥ हस्तंप्रक्षाल्यतोयेननपुनर्धारयेज्जलं ॥ प्राणाहुतींचहुत्वातुपश्चादन्नंविमर्दयेत् ॥ मर्दितं भोजयेद्यस्तुभुक्त्वाचांद्रायणंचरेत् ॥ घृतहीनंतुयोभुंक्तेनरश्चाहुतिपंचकं ॥ पश्चाद्धृतेनयोभुंक्तेभुक्त्वाचांद्रायणंचरेत् ॥ अनेन विधिनाविप्रोवाग्यतोभोजनंचरेत्इति ॥ मनुः ॥ मधुपर्केचसोमेचह्यप्सुप्राणाहुतीषुच ॥ आस्यहोमेषुसर्वेषुनोच्छिष्टंमनुर

ब्रवीत् ॥ दक्षिणंतुपरित्यज्यवामेनीरंनिधापयेत् ॥ अभोज्यंतद्भवेदन्नंपानीयंचसुरासमं ॥ जलपात्रंचनिक्षिप्यमणिबंधेच दक्षिणे ॥ भुक्तिकालेतुविप्रोवैपिबेदन्येनपाणिनां ॥ एकपंक्त्युपविष्टानांद्विप्राणांसहभोजने ॥ यद्येकोपित्यजेत्पात्रंशेषमन्नंनभोजयेत् ॥ भुंजानेषुचविप्रेषुयोग्रेपात्रंविमुंचति ॥ समूढोनरकंयातिब्रह्महासतुजायते ॥ अग्निनाभस्मनाचैवदर्भेणसलिलेनवा ॥ अंतरेद्वारदेशेतुपंक्तिदोषोनविद्यते ॥ एकपंक्त्युपविष्टानामन्योन्यंस्पर्शयेद्यदि ॥ भुक्त्वातदन्नमत्याज्यंगायत्र्याष्टशतंजपेत् ॥ भवेदुच्छिष्टसंस्पर्शोभोक्तुर्वाभोजनस्यवा ॥ अन्नंतदेवभोक्तव्यमत्याज्यंभाजनंस्थितं ॥ पुनरन्नंनभोक्तव्यंयदिभुंजीतकिल्बिषी ॥ ततश्चैवजपेद्देवींशतमष्टोत्तरंसुधीः ॥ शेषमुत्धृत्यभोक्तव्यंश्रूयतामंत्रकारणं ॥ तृप्तोदद्यादन्नशेषंभूमौदुर्गतितृप्तये ॥ भुक्त्वापीत्वातुयत्पात्रंरिक्तंत्यज्यतियोनरः ॥ सनरःक्षुत्पिपासार्तोभवेजन्मनिजन्मनि ॥ यत्रक्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनां ॥ दुर्गतीनामयादत्तमक्षय्यमुपतिष्ठतु ॥ अर्धंपिबतिगंडूषमर्धंत्यजतिभूमिषु ॥ प्रीणंतिपितरःसर्वेयेचान्येभूमिदेवताः ॥ यद्युच्छिष्टंदनाचांतोभुक्तवानासनाद्द्विजः ॥ सद्यःस्नानंप्रकुर्वीतनान्यथाप्रयतोभवेत् ॥ अंगिराः ॥ उच्छिष्टोच्छिष्टसंस्पृष्टःशुनाशूद्रेणवाद्विजः ॥ उपोष्यरजनीमेकांपंचगव्येनशुध्यति ॥ श्वानंचशूद्रमुच्छिष्टंह्यनुच्छिष्टस्तुयःस्पृशेत् ॥ ॥ स्नानंविधीयतेतस्यपात्राणांचालनंविना ॥ स्मृतिः ॥ गंडूषप्राशनात्पूर्वंहस्तंप्रक्षालयेद्द्विजः ॥ हतंदैवंचपित्र्यंचआत्मानंचोपपातकैः ॥ गौतमः ॥ रात्रौभोजनकालेषुयदिदीपोविनश्यति ॥ पात्रंधृत्वातुपाणिभ्यांभास्करंमनसास्मरेत् ॥ दृष्ट्वातेनपुनर्दीपितच्छेषंभोजयेद्द्विजः ॥ पुनरन्नंनभोक्तव्यंयदिभुंजीतकिल्बिषी ॥ परपाकानिवृत्तस्तुपरपाकरतस्तुयः ॥ तयोरन्नं

नभोक्तव्यंभुत्काचांद्रायणंचरेत् ॥ कुक्षौतिष्ठतियस्यान्नंवेदाभ्यासेनजीर्यते ॥ कुलंतारयतेतेषांदशपूर्वान्दशापरान् ॥ भ्रष्ट
शौचेगताचारेविप्रेवेदविवर्जिते ॥ दीयमानंरुदत्यन्नंकिंमयादुष्कृतंकृतं ॥ अथनिषिद्धान्नं ॥ ब्रह्मोदनेतथाचौलेसीमंतेप्रथ
मार्तवे ॥ मासिकेचतथाकृच्छ्रैनैवभोजनमाचरेत् ॥ गणान्नंगणिकान्नंचसूतकान्नंतथैवच ॥ यत्यन्नंचैवशूद्रान्नंनाश्नीयाद्द्विज
सत्तमः ॥ नग्नश्राद्धेनवश्राद्धेसपिंडीप्रेतकर्मसु ॥ प्रायश्चित्तेनभुंजीतभुत्काचांद्रायणंचरेत् ॥ वृंताकंकृष्णकालिंगंबिल्वोदुं
बरभिःसटाः ॥ एतानिसेवतेयस्तुतस्यदूरगताोहरिः ॥ अन्नंभुंक्तेयदायस्तुसुवर्णस्तेयमंदिरे ॥ इंद्रानुपूपणासूक्तंसहस्रंवैजपे
ज्जले ॥ अथवमनविधिः ॥ उत्तराचमनात्पूर्वंवमनंयदिजायते ॥ स्नानंतत्रनकर्तव्यंगंडूषैःशुद्धिरिष्यते ॥ उत्तराचमनं
पीत्वावमनंयदिजायते ॥ तत्रस्नानेनशुद्धिःस्यादितिप्राहुर्मनीषिणः ॥ अथतांबूलविधिः ॥ तांबूलचर्वणंकुर्याद्भुत्काराात्रौ
तथैवच ॥ अभ्यंगेचैवमांगल्येदिवावाप्यथवानिशि ॥ पर्णमूलेभवेद्व्याधिःपर्णाग्रेपापसंभवः ॥ चूर्णपर्णंहरेदायुःशिराबुद्धिं
विनाशयेत् ॥ पंचसप्ताष्टपर्णानिदशद्वादशवापिवा ॥ दद्यात्स्वयंचगृण्हीयादितिकैश्चिदुदीरितं ॥ मृताशौचेतथाश्राद्धेमा
तापित्रोर्मृतेहनि ॥ उपवासेचतांबूलंदिवारात्रौविवर्जयेत् ॥ पक्षश्राद्धेतथादर्शेयुगमन्वंतरादिषु ॥ श्राद्धंनिर्वर्त्यभुत्कातुतांबूलं
खादयेद्द्विजः ॥ अथसायंविधिः ॥ रवेरस्तमयात्पूर्वंघटिकातुयदाभवेत् ॥ सायंसंध्यामुपास्याथकुर्याद्धोमंचपूर्ववत् ॥
॥ अथदीपाः ॥ रवेरस्तंसमारभ्ययावत्सूर्योदयोभवेत् ॥ यस्यतिष्ठेद्गृहेदीपस्तस्यनास्तिदारिद्रता ॥ इतिधर्मप्रवृत्तौनित्यक
र्मविधिः ॥ अथसंग्रहेतांबूलविधिः ॥ मार्कंडेयः ॥ भूयोप्याचम्यकर्तव्यंततस्तांबूलभक्षणमिति ॥ अदत्वातुमुखेपत्रंपूगं

भक्षतियोनरः ॥ सप्तजन्मदरिद्रःस्यान्नांतकालेहरिंस्मरेत् ॥ वासिष्ठः ॥ सपूगंससुपत्रंचचूर्णेनचसमन्वितं ॥ अदत्वाद्विजदेवेभ्यस्तांबूलंवर्जयेद्बुधः ॥ इतिसंग्रहेतांबूलविधिः ॥ अथप्रसंगात्संग्रहनिर्णयः ॥ तथाचमन्वादयः ॥ श्वचर्मणियथाक्षीरमपेयंब्रह्मवादिभिः ॥ तद्वच्छूद्रमुखाद्वाक्यंनश्रोतव्यंकदाचन ॥ पंडितस्यापिशूद्रस्यशास्त्रज्ञानरतस्यच ॥ वचनंतस्यनग्राह्यंशुनोच्छिष्टंहविर्यथा ॥ शूद्रोज्ञानबलेनैवब्राह्मणान्द्विषतेयदि ॥ सयातिनरकंघोरंयावदाभूतसंप्लवं ॥ अप्रणामगतेशूद्रेस्वीकुर्वीतिचयेद्विजाः ॥ सशूद्रोनरकंयातिब्राह्मणश्चतथैवच ॥ कृष्णसर्पंद्विजंनष्टंशूद्रसंसर्गसंयुतं ॥ गर्दभंजारजातंचदूरतःपरिवर्जयेत् ॥ इतिशूद्रवाक्यादिनिषेधः ॥ अथग्रहणनिर्णयः ॥ सूर्यग्रहेतुनाश्नीयात्पूर्वंयामचतुष्टयं ॥ चंद्रग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विनेति ॥ गौतमः ॥ वसिष्ठः ॥ ग्रस्तोदयेविधोःपूर्वंनाहर्भोजनमाचरेत् ॥ भृगुः ॥ ग्रस्तावेवास्तमानंतुरवींदूप्राप्नुतोयदि ॥ तयोःपरेद्युरुभयेस्नात्वाभ्यवहरेन्नरइति ॥ विष्णुधर्मोत्तरे ॥ अहोरात्रंनभोक्तव्यंचंद्रसूर्यग्रहोयदा ॥ ॥ मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृत्वाततःपरमिति ॥ कात्यायनः ॥ चंद्रसूर्यग्रहेभुत्काप्राजापत्येनशुध्यति ॥ तस्मिन्नेवदिनेभुत्कात्रिरात्रेणैवशुध्यति ॥ दक्षः ॥ अयनेविषुवेचैवचंद्रसूर्यग्रहेतथा ॥ अहोरात्रोषितस्नात्वासर्वपापैःप्रमुच्यतइति ॥ ॥ पुत्रीतुनोपवसेत् ॥ नारदः ॥ संक्रान्त्यामुपवासंचकृष्णैकादशिवासरे ॥ चंद्रसूर्यग्रहेचैवनकुर्यात्पुत्रवान्गृही ॥ षड्रात्रिंशन्मते ॥ सूर्यग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा ॥ तत्रस्नानंनकुर्वीतदद्याद्दानंनचक्वचित् ॥ इतिग्रहनिर्णयः ॥ विष्णुपुराणे ॥ पुनःपाकमुपादायसायमप्यवनीपते ॥ वैश्वदेवनिमित्तंतुपत्न्यासार्धंबलिंहरेत् ॥ अतिथिंचागतंदृष्ट्वास्वशक्त्यापूजयेद्बु

धः ॥ कृतपादादिशौचश्चभुक्तासायंततोगृही ॥ प्रदोषःपश्चिमौयामौवेदाभ्यासेननैनयेत् ॥ प्रहरद्वयशायीतुब्रह्मभूयायकल्पतइ-
ति ॥ अथवानप्रस्थधर्मः ॥ धर्मांश्चविविधान्कृत्वास्वर्गमोक्षफलप्रदान् ॥ स्वधर्मेषुसुतान्स्थाप्यवानप्रस्थोभवेत्ततः ॥ मूलकारः॥
अनुज्ञाप्यसुहृद्वंधून्वनंगच्छेद्द्विजोत्तमः ॥ गृहीत्वाचाग्निहोत्रंहिसभार्योह्येकएववा ॥ अथाग्निहोत्रविधिः॥दाराग्निहोत्रदीक्षांचकुरु
तेयोग्रजेस्थिते ॥ परिवित्तासविज्ञेयःपरिवित्तिस्तुपूर्वजः ॥ आचम्यप्राणानायम्यममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसा
यमग्निहोत्रंतंडुलादिद्रव्येणहोष्यामितिसंकल्प्य ॥ ओमितितूष्णींचत्रिस्त्रिर्दक्षिणाग्निक्रमेणपर्युक्ष्य ॥ ऋतसत्याभ्यांत्वापर्युक्ष्यामी
तिसायं ॥सत्यऋताभ्यांत्वेतिप्रातः॥तंतुंतन्वन्नितिगार्हपत्यादविच्छिन्नामुदकधारांहरेदाहवनीयात् ॥ अग्नेष्टेतेजोमहार्षीरितिगा
र्हपत्येदर्भान्प्रज्वाल्य ॥ अंतरिज्वाक्षांतारिताअरातयइतीतात्रिःपर्यग्निकरणंकृत्वा ॥ प्रत्युष्टंरक्षःप्रत्युष्टाअरातयोनिष्टप्तंरक्षोनिष्टप्ता
अरातयइतिस्रुक्स्रुवंप्रतपेत् ॥ उत्तरतस्थाल्यांस्रुचमासाद्य ॥ ॐमुन्नयामीतिसायं ॥ ॐमुन्नेष्यामीतिप्रातः ॥ ॐमुन्न
येतियजमानः ॥ भूरिळाभुवरिळास्वरिळावृद्धइळेतिहविः ॥ स्रुवेणगृहीत्वास्थालीमभिमृश्यसमिधंस्रुचंचाध्यधिगा
र्हपत्यंहृत्वाप्राणसंमितामाहवनीयसमीपेकुशेषूपसाद्यजान्वाच्यसमिधमादध्यात् ॥ रजतांत्वाग्निज्योतिषंरात्रिमिष्टकामुपदधेस्वा
हेतिसायंहरिणींत्वासूर्यज्योतिषमहरिष्टकामुपदधेस्वाहेतिप्रातः ॥ रजतांत्वाग्निर्ज्योतिषंरात्रिमिष्टिकामुपदधे ॥ ऋषिणाते
नब्रह्मणातयादेवतयांगिरस्वध्रुवासीदेतिप्रातरनुमंत्र्य ॥ विद्युदसिविद्यमेपाप्मानमग्नौश्रत्धेतिसायमुपविश्य ॥ वृष्टिरसिवृ-
श्चमेपाप्मानमप्सुश्रत्धेतिप्रातरुपविश्य ॥ ॐभूर्भुवस्वरोमग्निर्ज्योतिरग्निस्वाहेतिसायं ॥ ॐभूर्भुवस्वरोंसूर्योज्योतिःसूर्यः

स्वाहेतिप्रातःपूर्वाहुतिंहुत्वा ॥ ताअस्यसूददोहसइतिगार्हपत्यमवेक्षेत ॥ पशून्मेयच्छेत्यनुमंत्र्य ॥ प्रजापतयेस्वाहेत्युत्तरामाहुतिं जुहुयात् ॥ ततोयजमानः ॥ भूर्भुवःस्वःसुप्रजाःप्रजाभिःस्यांसुवीरोवीरैःसुपोषःपोषैः ॥ अग्निमीळेतिसूक्तंजपित्वात्रिरनुकंप्य ॥ उन्मृज्यकुशमूलेषुनिमार्ष्टि ॥ पशुभ्यस्त्वेतितेषांदक्षिणतउत्तानाअंगुलीःकरोतिप्राचीनावीतिस्वधापितृभ्यइत्यपोनिनयेत् ॥ यज्ञोपवीतीत्यपउपस्पृश्य ॥ प्रजापतयेस्वाहेतिगार्हपत्येसमिधंमादध्यात् ॥ अग्नयेगृहपतयेस्वाहा ॥ प्रजापतयेस्वाहेति गार्हपत्येआहुतिद्वयंजुहुयात् ॥ अग्नयेन्नादायान्नपतयेस्वाहेतिदक्षिणाग्नौ ॥ प्रजापतयेतिपूर्ववत् ॥ ततोयजमानः ॥ अभयंवोभयंमेस्त्वितिजपेत् ॥ आयुषेत्वाप्राश्नामीतिहविःशेषंप्राशयेत् ॥ प्रत्याचम्य ॥ सर्वदेवजनेभ्यःस्वाहेतिजलंत्रिःक्षिपेत् ॥ अथैनांकुशैः प्रक्षाल्यप्रागुदीच्योर्निनयेत् ॥ ऋतुभ्यःस्वाहा ॥ १ ॥ दिग्भ्यःस्वाहा ॥ २ ॥ ऋप्तसप्तर्षिभ्यःस्वाहा ॥ ३ ॥ इतरजनेभ्यःस्वाहा ॥ ४ ॥ पृथिव्याममृतंजुहोमिस्वाहेतिपश्चात्गार्हपत्यस्यआहवनीयेप्रताप्यांतर्वेदौनिदध्यात् ॥ दक्षिणतस्तिष्ठन् ॥ दीदिहि ॥ दीदाह ॥ ॥ दीदिदाय ॥ आहवनीयादिषुतूष्णींसमिद्वयंजुहुयात्प्रत्येत्यउक्तंपर्युक्षणं ॥ सायमग्निहोत्रषाड्गुण्यार्थमनाज्ञातमितिमंत्रत्रयमिदं विष्णुरितिचजपेत् ॥ अग्नेनयसुपथारायेअस्मानितिवर्गद्वयेनप्रदक्षिणत्रयंकुर्यात् ॥ नमस्तेगार्हपत्यायनमस्तेदक्षिणाग्नये ॥ ॥ नमआहवनीयायमहावेद्यैनमोनमः ॥ नमस्कारंकृत्वा ॥ यस्यस्मृत्येत्युक्त्वा ॥ अनेनहोमेनश्रीयज्ञपुरुषःप्रीय० ॥ इत्यग्निहोत्रनित्यहोमविधिः ॥ अपत्निकः ॥ समारोप्यब्राह्मणः ॥ प्रव्रजेत्गृहादिति ॥ अथचतुर्थः ॥ अंगिराः ॥ प्रव्रजेद्ब्रह्मचर्येवप्रव्रजेतगृहादपि ॥ वनाद्वाप्रव्रजेद्विद्वानातुरोवाथदुःखितइति ॥ दुःखितोव्याघ्रादिभिरितिमाधवः ॥ भारते ॥ उत्प-

न्नेसंकटेघोरेतथाव्याघ्रादिसंकटे ॥ भयभीतस्यसंन्यासमंगिरामुनिरब्रवीत् ॥ आतुराणांतुसंन्यासेनविधिर्नैवचक्रिया ॥ प्रैषमा
त्रंसमुच्चार्यसन्यासंतत्रपूरयेदिति ॥ अथश्रुतिः ॥ यद्यातुरस्यान्मनसावाचावासन्यसेदिति ॥ अत्रहिज्ञानाद्यर्थतयाकाम्ये
सन्यासेसर्वांगोपसंहारासमर्थस्यातुरस्याधिकारासंभवात्तंप्रत्यवाप्राप्तःसएवसन्यासोनेनविधीयते ॥ विशिष्यविधिवला-
देर्वादांतराभावेपिफलवत्वस्वीकारः ॥ पापक्षयार्थकसंध्यावंदनादौशक्ताशक्तव्यवस्थायांगापेक्षानपेक्षयोर्दर्शनाच्च ॥ यदि
यदान्वयस्यापिरुच्यध्याहारादिभिः संभवइतिव्यवस्थापितमन्यत्रनचवेदानियमंलोकममुंचपरित्यज्यात्मानंअन्विछेदितिवा
क्यात्सन्यासस्यश्रवणांगत्वप्रतीतेरातुरस्यप्रधानश्रवणादसंभवादंगानुष्ठानंव्यर्थमितिवाच्यं ॥ गर्गीजनकादीनाश्रवणानुरो
धेनास्यवाक्यस्यदर्शपूर्णमासाभ्यामिष्ट्वासोमेनयजेतेतिवक्रममात्रपरत्वात् ॥ आतुरंप्रतिविधिबलादेवजन्मांतरीयोपिक्रमनिरू
पकः ॥ सएवजनकादेरितिकल्पतइतिदिक् ॥ अस्यधर्मानाहमात्स्ये ॥ अष्टौमासान्विहारःस्याद्यतीनांसंयतात्मनां ॥
॥ एकत्रचतुरोमासान्वार्षिकान्निवसेत्पुनः ॥ अविमुक्तेप्रविष्टानांविहारस्तुनविद्यते ॥ आत्रेः ॥ नतीर्थवासीनित्यंस्यान्नो
पवासपरोयतिः ॥ नचाध्ययनशीलस्यान्नव्याख्यानपरोभवेदिति ॥ अध्ययनंचकर्मकांडतन्मीमांसयोः ॥ वेदांतानांमि
मांसायास्तंप्रतिविधानादितिमाधवः ॥ आचारकांडे ॥ शिखांपौंड्रंचसूत्रंचसमयाचारमेवच ॥ पूर्वैराचरितंकुर्यादन्यथा
पतितोभवेत् ॥ इतिसन्यासविधिः ॥ अथप्रदोषः ॥ प्रदोषश्चरात्रिर्विवक्षितेतिमाधवः ॥ मेधाकामस्त्रयोदश्यांसप्तम्यां
चविशेषतः ॥ चतुर्थ्यांचप्रदोषेषुनस्मरेन्नचकीर्तयेदिति ॥ षष्ठीचद्वादशीचैवअर्धरात्रोननाडिका ॥ प्रदोषोनत्वधीयीतत्

तीयानवनाडिकेतिनिर्णयामृते ॥ गर्गोपि ॥ रात्रौयामत्रयादर्वाक्सप्तमीवात्रयोदशी ॥ प्रदोषःसतुविज्ञेयःसर्वविद्याविगर्हितः ॥ रात्रौनवसुनाडीषुचतुर्थीयदिदृश्यते ॥ प्रदोषःसतुविज्ञेयोवेदाध्ययनगर्हितः ॥ अत्रिः ॥ चतुर्थीप्रथमेयामेसार्धयामेचसप्तमी ॥ यामद्वयंत्रयोदश्यांप्रदोषःसर्वघातकः ॥ अनध्यायेष्वध्ययनेप्रज्ञाआयुःप्रजाःश्रियं ॥ ब्रह्मवीर्यंश्रियंतेजोनिकृंततियमःस्वयं ॥ मंत्रवीर्यक्षयभयादिंद्रोवज्रेणहंतिच ॥ ब्रह्मराक्षसताचांतेनरकश्चभवेद्ध्रुवमितिप्रदोषविचारः ॥ ॥ होमंवैतानिकंकृत्वास्मार्तंकुर्याद्विचक्षणः ॥ स्मृतीनांवेदमूलत्वात्स्मार्तंकेचित्पुराविदुरितिभरद्वाजः ॥ व्यासः ॥ ॥ श्रौतंकर्मनचेच्छक्तःकर्तुंस्मार्तंसमाचरेत् ॥ तत्राप्यशक्तःकरणेसदाचारंलभेद्बुधः ॥ न्यायोपार्जितवित्तेनकर्तव्यंतुसदाद्विजेति ॥ ब्रह्मचारीयतिश्चैवविद्यार्थीगुरुपोषकः ॥ अध्वगःक्षीणवित्तश्चषडेतेभिक्षुकास्मृताः ॥ भिक्षाहारोनिराहारोभिक्षानैवप्रतिग्रहः ॥ अवधूताचपूताचसोमपानंदिनेदिने ॥ अथतिलतर्पणनिषेधकालः ॥ मरीचिः ॥ सप्तम्यांरविवारेचमातापित्रोःक्षयेहनि ॥ तिलैर्यस्तर्पणंकुर्यात्सभवेत्पितृघातकः ॥ संग्रहे ॥ नंदायांभार्गवदिनेकृत्तिकासुमघासुच ॥ भरण्यांभानुवारेचगजच्छायाव्हयेतथा ॥ अयनद्वितयेचैवमन्वादिषुयुगादिषु ॥ पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणं ॥ बौधायनः ॥ विवाहेचोपनयनेचौलेसतियथाक्रमं ॥ वर्षमर्धंतदर्धंचनेत्येकेतिलतर्पणं ॥ संस्कारेषुतथान्येषुजातपुंसवनादिष्विवतिस्मृत्यंतरे ॥ यावन्मासःसमाप्येततावत्पिंडांश्चवर्जयेत् ॥ वृध्यावनंतरंभाज्ञस्तथैवतिलतर्पणमिति ॥ प्रतिप्रसवमाहकात्यायनः ॥ उपरागेपितुःश्राध्येपातेमायांचसंक्रमे ॥ निषेधेपीहसर्वत्रतिलैस्तर्पणमाचरेदिति ॥ अत्रव्यतीपातोवैधृतेरप्युपलक्षणं ॥ वृद्धमनु ॥ संक्रांत्यां

दिनिमित्तेषुस्नानांतेतर्पणंतथा ॥ तिथिवारनिमित्तेषुतिलैस्तर्पणमाचरेदिति ॥ कात्यायनः ॥ योगृहीत्वाविवाहाग्निंगृहस्थइतिम
न्यते ॥ अन्नंतस्यनभोक्तव्यंवृथापाकोहिसस्मृतः ॥ यस्तुप्रव्रजतितोभूत्वासेवतेमैथुनंपुनः ॥ षष्टिवर्षसहस्राणिविष्टायांजायतेक्रिमिः
शूद्रान्नंशूद्रसंपर्कःशूद्रेणचसहासनं ॥ शूद्राद्विद्यागमःकश्चिज्जलंतमपिपातयेत् ॥ शूद्रादात्तद्दत्तानिर्वापंयेपचंत्सबुधाद्विजाः ॥ तेयांति
नरकंघोरंब्रह्मतेजोविवर्जिताः ॥ हस्तदत्तंचयेस्नेहाल्लवणंव्यजनानिच ॥ दातारंनोपतिष्ठंतेभोक्ताभुंजतिकिल्बिषं ॥ आयसेन
तुपात्रेणयदन्नमुपदीयते ॥ भोक्तातद्विट्समंभुंक्तेदाताचनरकंव्रजेत् ॥ अंगुल्यादंतकाष्ठंतुप्रत्यक्षंलवणंतुयत् ॥ मृत्तिकाभक्षणंयच्च
सर्वंगोमांसभक्षणैः ॥ पानीयंपायसंभक्ष्यंघृतंलवणमेवच ॥ हस्तदत्तंनगृण्हीयात्तुल्यंगोमांसभक्षणं ॥ अग्रतोनिवसेन्मूर्खोदूरतश्चगु-
णान्वितः ॥ गुणान्वितायदातव्यंनास्तिमूर्खेव्यतिक्रमः ॥ ब्राह्मणातिक्रमोनास्तिविप्रेवेदविवर्जिते ॥ ज्वलंतमग्निमुत्सृज्यनाहि-
भस्मनिहूयते ॥ संनिकृष्टमधीयानंब्राह्मणंयोव्यतिक्रमेत् ॥ भोजनेचैवदानेचदहेदासप्तमंकुलं ॥ देवद्रव्यविभागेनब्रह्मस्वहरणेन-
च ॥ कुलान्याशुविनश्यंतिब्राह्मणातिक्रमेणवै ॥ मादेहीतिवचोब्रूयाद्देवाग्निब्राह्मणेषुच ॥ तिर्यग्योनिशतंगत्वाचांडालेष्वभिजा-
यते ॥ वाचायच्चप्रतिज्ञातंकर्मणानोपपादितं ॥ ऋणंतत्धर्मसंयुक्तंइहलोकपरत्रच ॥ विघसाशीभवेन्नित्यंनित्यंचामृतभोजनः ॥
यज्ञशेषामृतंज्ञेयंभुक्तंतुविघसंविदुः ॥ सव्यादंसात्परिभ्रष्टंनाभिदेशेव्यवस्थिते ॥ वस्त्रेसएकवासास्तंदैवेपित्र्येचवर्जयेत् ॥ हस्तौ
प्रक्षाल्यगंडूषंयःपिवेद्भोजनांतरे ॥ दैवंपित्र्यंतथात्मानंत्रयंसउपघातयेत् ॥ गणान्नंगणिकान्नंचयदन्नंग्रामयाचके ॥ स्त्रीणांप्रथम
गर्भेषुभु० ॥ पक्षेवायदिवामासेयस्यगेहेत्तिनद्विजः ॥ भुक्त्वादुरात्मनस्तस्यचरेच्चां० ॥ सत्रिणांदीक्षितानांचयतीनां

ब्रह्मचारिणां ॥ एतेषांसूतकंनास्तिऋत्विजांकर्मकुर्वतां ॥ अजीर्णेभ्युदितेवांतौश्मश्रुकर्मणिमैथुने ॥ दुःस्वप्नेदुर्जनस्पर्शेस्ना- नमेवविधीयते ॥ चैत्यवृक्षंचितायूपंशिवनिर्माल्यभोजनं ॥ वेदविक्रयिणंदृष्ट्वासचैलोजलमाविशेत् ॥ अग्न्यागारेगवांगोष्टेदेवब्रा ह्मणसंन्निधौ ॥ स्वाध्यायेभोजनेपानेपादुकेनैवधारयेत् ॥ खळक्षेत्रगतंधान्यंकूपवापीषुयज्जलं ॥ अग्राह्यादपितत्ग्राह्यंयच्चगो- ष्टगतंपयः ॥ योवेष्टितशिराभुंक्तेयोभुंक्तेदक्षिणामुखः ॥ सोपानत्कश्चयोभुंक्तेतद्वैरक्षांसिभुंजते ॥ यातुधानाःपिशाचाश्चराक्षसाः क्रूरकर्मणः ॥ हरंतिरसमन्नस्यमंडलेनविवर्जिते ॥ ब्राह्मणेचतुरस्रंस्यात्र्यस्रंवैबाहुजन्मनः ॥ वर्तुलंचविशःप्रोक्तंशूद्रस्याभ्युक्षणंस्मृ तं ॥ नोत्संगेभाजनंकृत्वानोपाणौनचकर्पटे ॥ नासनेनचशय्यायांभुंजीतनमलार्दितः ॥ फाणितंगोरसंतोयंलवणंमधुकांजितं ॥ हस्तेनब्राह्मणोदत्वाकृच्छ्रचां० ॥ नवृथाशपथंकुर्यात्स्वल्पेप्यर्थेनरोत्तमः ॥ वृथाहिशपथंकुर्यात्प्रेत्यचेहविनश्यति ॥ कामिनीषुविवाहेषुगवांभुक्तौधनक्षये ॥ ब्राह्मणाभ्युपपत्तौचशपथेनास्तिपातकं ॥ आश्रमेतुयतिर्यस्यमुहूर्तमपिविश्रमेत् ॥ किंतस्यानेकतंत्रेणकृतकृत्यःसजायते ॥ ध्यैचिंतायांस्मृतोधातुश्चिंतातत्त्वसुनिश्चला ॥ एतद्ध्यानमिदंप्रोक्तंसगुणंनिर्गुणं- द्विधा ॥ अमृतंब्राह्मणस्यान्नंक्षत्रियान्नंपयःस्मृतं ॥ वैश्यस्यचान्नमेवान्नंशुद्रस्यरुधिरंस्मृतमिति ॥ काशीखंडे ॥ ॥ ब्रह्मचारीगृहस्थोवावानप्रस्थोथभिक्षुकः ॥ एषामाधारभूतोसौग्रहस्थोनान्यथेतिच ॥ अग्निशुश्रूषणरतःपंचयज्ञप रायणः ॥ षट्कर्मनिरतोनित्यंदेवपित्रातिथिप्रियः ॥ पूर्वाण्हेदैविकंकर्मकर्तव्यंकर्मकांडवत् ॥ मध्यंदिनेमनुष्या णांपितॄणामपराण्हिके ॥ देवैर्मनुष्यैःपितृभिस्तिर्यग्भिश्चोपगृह्यते ॥ ग्रहस्थःप्रत्यहंयस्मात्तस्माज्ज्येष्टोगृहाश्रमीति ॥ संग्रहेतां

बूलादिप्रकरणंसमाप्तं ॥ मंत्रार्थमनुसंधानोगायत्रींजपेदितिवचनात्तदर्थमाह ॥ प्रणवोब्रह्मपरः ॥ भवत्यस्माद्भूतानीतिभूः ॥ अधिकरणेक्विप् ॥ भावयतिस्छापयतिविश्वमितिभुवः ॥ अंतर्भावितण्यर्थादसुनिर्गुणाभावस्छांदसः ॥ सुष्टुरइतिप्रा प्नुवसेतादितिस्वः ॥ ऋधातोःकर्मणिविचूबाहुलकात् ॥ महपूजायां ॥ अस्मात्असुनिमहःपूज्यं ॥ जनजनने ॥ तप- आलोचने ॥ आभ्यांकर्तर्यसुन् ॥ सत्यंकालत्रयबोध्यं ॥ सवितुःप्रेरकस्यवरेण्यंभजनीयंभर्गःसंसारभर्जनात्सच्चिदानंदा त्मकरूपंधीमहिध्यायेम ॥ यःसवितानोधियःप्रचोदयात्प्रेरयेत् ॥ पंचमलकारः ॥ आपःव्यापकं ॥ ज्योतिश्चिद्रूपं ॥ रसःसुखं ॥ अमृतंमोक्षः ॥ इदक्रब्रह्मेति ॥ ॐअंगीकुर्वेध्यायामीत्यर्थः ॥ अग्निश्चेत्यस्यायमर्थः ॥ माइतिमांएतेर क्षतां ॥ मन्युःक्रोधाभिमानिनीदेवता ॥ तथाचभगवान्व्यासः ॥ अभिमानव्यपदेशास्त्वित्यत्रसूत्रयत् ॥ मन्युपतयोजितक्रो धामहात्मानः ॥ शिक्षाशिक्षेन ॥ सुपांसुलुगित्यादिनाडादेशः ॥ इदंपापजातंमांतत्कर्तारंचाहकारंअमृतयोनौमोक्षकार णेअग्न्याख्येज्योतिषिपरब्रह्मणिजुहोमिप्रक्षिपामितदर्थमिदमभिमंत्रितंजलंस्वाहा ॥ मदीयवक्त्राग्नौहुतमस्तु ॥ एतेनसूर्य श्चेत्यपिव्याख्यातं ॥ आपःपुनंत्वित्यस्यार्थः ॥ आपःपृथिवीमच्छरीरं ॥ यच्छरीरंसापृथिवीत्यारण्यकेउक्तेः ॥ साचपृथिवीं मांल्लिंगशरीरंपुनातु ॥ किंच ॥ ब्रह्मणोवेदस्यपतिः ॥ परमात्मानंपुनंतु ॥ पुनात्वितिव्यत्ययेनबहुवचनं ॥ ब्रह्मवेदः ॥ पूतापू तमित्यर्थः ॥ सुपांसुलिगितिपूर्वसवर्णः ॥ उच्छिष्टंतन्निमित्तकंपापंसर्वपरिसेशेषः ॥ मांपुनंतुतदर्थंस्वाहा ॥ अभिमंत्रितं उदकंप्राणाग्नौजुहोमीत्यर्थः ॥ इतिमंत्रार्थः ॥ अथशिवपूजनं ॥ भवंदेवंतर्पयामि ॥ १ ॥ शर्वंदेवं० ॥ २ ॥ उग्रं-

दे० ॥ ३ ॥ रुद्रंदेवंत॥ ॥ ४ ॥ भीमंदे० ॥ ५ ॥ ईशानंदे० ॥ ६ ॥ पशुपतिंदे० ॥ ७ ॥ महांतंदे० ॥ ८ ॥ भवस्यदेवस्य प० ॥ ९ ॥ शर्वस्यदेवस्यपत्नींतर्पयामीत्यादि ॥ पुरुषसूक्तेनवामदेवायेत्यादिभिःपूजयेत् ॥ इतिश्रीवाजपेयीभट्टोजीदीक्षितविरचितेधर्मप्रवृत्तौधर्मसंग्रहेधर्मप्रवृत्याद्यवलोक्यसारांशमुद्धृत्यआन्हिकप्रयोगःसमाप्तः ॥ अथधर्मप्रवृत्तौगर्भाधानशयनविधिः ॥ स्वगृहेप्राक्शिरःकुर्याश्वसुरेदक्षिणाशिरः ॥ प्रत्यङ्मुखःप्रवासेचनकदाचिदुदक्शिरः ॥ दिपेनष्टेतुयःसंगंकुरुतेमानवोयदि ॥ यावज्जन्मदरिद्रत्वंलभतेनात्रसंशयः ॥ चंदनानुविलिप्तांगोधृत्वापुष्पाणिदंपती ॥ तांबूलचर्वणंकृत्वाप्रदीपेमैथुनंचरेत् ॥ ऋतौतुगर्भसिक्तत्वात्स्नानंमैथुननिसृतं ॥ अनृतौतुयदागछेच्छौचंमूत्रपरीषवदातिगर्भाधानं ॥ अथपुंसवनं ॥ ॥ व्यासः ॥ तृतीयेगर्भसंस्कारंमासेपुंसवनंभवेत् ॥ आद्यगर्भेनविज्ञातस्तृतीयेमासिवैयादि ॥ चतुर्थेगर्भमासेसीमंतोन्नयनंषष्ठाष्टमयोर्वेतिसूत्रं ॥ स्मृतिः ॥ आधानादष्टमेमासिसीमंतोन्नयनंभवेत् ॥ नवमेमासिवाकुर्याद्यावत्गर्भविमोचनं ॥ पुंसवनेचसीमंतेतथाचौलोपनायने ॥ गोदानेस्नानउद्वाहेनांदीश्राद्धंपुरोदिने ॥ अथगर्भिणीधर्माः ॥ भूम्यांचैवोच्चनीचायामारोहणावरोहणे ॥ नदीप्रतरणंचैवशकटारोहणंतथा ॥ उग्रौषधंतथाक्षारंमैथुनंभारवाहनं ॥ कृतेपुंसवनेचैवगर्भिणीपारिवर्जयेत् ॥ अथगर्भिणीपतिधर्माः ॥ पुंसोभार्यागर्भिणीयस्यचास्तिसूनोश्चौलंक्षौरकर्मात्मनश्च ॥ गेहारंभंस्तंभसंस्थापनंचवार्धौस्नानंदूरयात्रांनकुर्यात् ॥ वाहनंदहनंचैववपनंसिंधुदर्शनं ॥ पर्वतारोहणंचैवनकुर्याद्गर्भिणीपतिः ॥ दक्षः ॥ ॥ ऋतुद्वयेव्यतीतेतुनकुर्यान्मौंजिबंधनं ॥ अग्न्याधानंगयाश्राद्धंवपनंचविवर्जयेत् ॥ गर्भिण्यामपिभार्यायांसूनोश्चौलंनकार

येत् ॥ भिन्नभार्यातुयस्येहनदोषश्चौलकर्मणि ॥ सूनोर्मातरिगर्भिण्यांचूडाकर्मनतस्यवै ॥ उर्ध्वंतुपंचमान्मासान्नकुर्यान्मौं-
जिबंधनं ॥ अष्टमासात्परंचैवनकुर्याछ्रात्धभोजनं ॥ श्मश्रुकर्मतथाचैवकेचिदाहुर्मनीषिणः ॥ अथजातकर्म ॥ जातेसु
तेपिताकुर्यान्नांदीश्रात्धंविधानतः ॥ जातकर्मतथाकुर्यादन्यैरालंभनंपुरा ॥ देवाश्चपितरश्चैवपुत्रेजातेद्विजन्मनां ॥ आयां-
तितदहस्तस्मात्पुण्यंपूज्यंचसर्वदा ॥ जातेसुतेत्वगाह्याथश्राद्धंकुर्याद्विधानतः ॥ जातकर्मविधानेनकुर्याद्दानादिकंततः ॥
॥ यावन्नच्छिद्यतेनालंतावद्दद्यात्स्वशक्तितः ॥ अशौचेपिप्रकर्तव्यंग्रहणेचयथाविधिः ॥ जातानुपंचमेषष्ठेनिशीथेबलिमाह
रेत् ॥ अर्चयेदष्टदिक्पालान्गीतवाद्यस्वशास्त्रकैः ॥ कृत्वाजागरणंरात्रौप्रदीपैःशांतिपाठकैः ॥ द्वाराद्वितीयभागेतुपुत्तलै
श्चापिकज्जलैः ॥ प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा ॥ त्रिष्वाशौचेनकुर्वीतसूतकेपुत्रजन्मनि ॥ दद्यात्तुप्रथमेदानंषष्ठेवापंच-
मेपिवा ॥ दशमेबलिदानंस्यादन्नदानंतथैवच ॥ अथनामकरणं ॥ कारिकायां ॥ द्वादशेनामकरणंनांदीश्राद्धेकृतेभवे
त् ॥ पुंसांयुग्माक्षराणिस्युर्विपरीतानियोषितां ॥ मनुः ॥ नामधेयंदशम्यांतुद्वादश्यांवापिकारयेत् ॥ पुण्येनक्षत्रादिव
सेमुहूर्तेवागुणान्विते ॥ आवत्सरंनैवदोषोमूढयोर्गुरुशुक्रयोः ॥ मलमासेपितत्कुर्यादुक्तकालेनदोषभाक् ॥ अपत्नीककुमा
रोपवेशनं ॥ पारिजाते ॥ संस्कार्यःपुरुषोवापिस्त्रीवादक्षिणतोभवेत् ॥ संस्कारकस्तुसर्वत्रतिष्ठेदुत्तरतःसदा ॥ स्मृसंत
रे ॥ जातेनामकरेचैवह्यन्नप्राशनकर्मणि ॥ निष्क्रमेचैवचौलेतुपत्नीपुत्रस्तुदक्षिणे ॥ गर्भाधानेपुंसवनेसीमंतोन्नयनेतथा ॥
॥ वधूप्रवेशनेचैवपुनःसंधानएवच ॥ पूजनेमधुपर्केचकन्यादानेतथैवच ॥ कर्मस्वेतेषुवैभार्यादक्षिणतूपवेशयेत् ॥ कन्यापु

त्रविवाहेचंगोदानेव्रतबंधने ॥ आशिर्वादाभिषेकेचपत्निर्तूत्तरतोभवेत् ॥ अथनिष्क्रमणं ॥ ज्योतिः ॥ ग्रहान्निष्क्र मणंसूनोश्चतुर्थेमासिकारयेत् ॥ यात्रोक्तसमयेमासितृतीयेप्रथमेपिवा ॥ पंचमेमासिकर्तव्यंशिशोश्चैवोपवेशनं ॥ संपूज्यसू करंभूमिंकुमारंचोपवेशयेत ॥ व्रीहिश्यामाकगोधूमान्माषमुद्गतिलायवाः ॥ एषामुपरिराशीनांवववस्त्रंप्रसार्यचे ॥ अथअन्न प्राशनं ॥ षष्ठाष्टदशमेमासिद्वादशेवान्नमाचरेत् ॥ अयुग्मेमासिवैस्त्रीणामितिकैश्चिदुदीरितं ॥ अथचौलं ॥ तृतीयेवत्सरेचौ लंकुर्वीतास्योत्तरायणे ॥ शुक्लेपक्षेशुभर्क्षेतुकृत्वाभ्युदयिकंततः ॥ यथाचारंतुकेषांचिदुपनीत्यासहेष्यते ॥ स्वस्त्यादिवाचये त्पूर्ववृद्धिपूर्तेषुकर्मसु ॥ मनुः ॥ चूडाकर्मद्विजातीनांसर्वेषामेवधर्मतः ॥ प्रथमेद्वेतृतीयेवाकर्तव्यंश्रुतिचोदनात् ॥ तृ- तीयेप्रथमेवाब्देपंचमेसप्तमेपिवा ॥ चौलकर्मद्विजःकुर्यात्कुलधर्मानुसारतः ॥ चौलवतोनियमानाहमदनपारिजाते ॥ न- ग्नःस्नात्वाचतुर्भुक्त्वावृषभारोहणंतथा ॥ त्रिरात्रिमशुचित्वात्तुत्रिभिःपक्षैर्व्यपोहति ॥ भक्ष्याभक्ष्येतथापेयेवाच्यावाच्येतथा नृते ॥ अस्मिन्कालेनदोषस्यात्सयावन्नोपनीयते ॥ अनुपनीतस्तुयोविप्रोमद्यंमोहात्पिबेद्यदि ॥ तस्यकृच्छ्रत्रयंपित्रा भ्रात्रावान्यथवातथा ॥ अथचूडादिनिषेधः ॥ चूडाकर्मशिशोर्माताגर्भिणीयदिवाभवेत् ॥ गर्भस्यवाविपत्तिःस्यादंप- सोर्वाशिशोरपि ॥ शिशोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् ॥ गतेतुपंचमेवर्षेगर्भिण्यामपिकारयेत् ॥ शिशोर्मातरि- गर्भिण्यांनचौलंनोपनायनं ॥ पंचमात्प्राङ्निषेधोयंवर्षादूर्ध्वंनदुष्यति ॥ अथशिशुलक्षणं ॥ शिशुस्त्वन्नप्राशनात्प्रागाचौ लंबालकःस्मृतः ॥ कुमारकस्तुविज्ञेयश्चौलादामौंजिबंधनात् ॥ शिशोरभ्युक्षणंप्रोक्तंबालस्याचमनंस्मृतं ॥ रजस्वलादिसं

स्पर्शेस्नानाच्छुद्धःकुमारकः ॥ अथकर्मलोपप्रायश्चित्तं ॥ आरभ्याधानमाचौलात्कर्मातीतंतुकर्मणां ॥ आज्यंव्याहृति-
भिर्हुत्वाप्रायश्चित्तंसमाचरेत् ॥ एतेष्वेकैकलोपेतुपादकृच्छ्रंसमाचरेत् ॥ चौलकर्मण्यतिक्रांतेपादकृच्छ्रद्वयंचरेत् ॥ अथाक्ष
रस्वीकारः ॥ द्वितीयजन्मतःपूर्वमक्षराभ्यासमाचरेत् ॥ मौंजीबंधनतःपश्चाद्वेदारंभोविधीयते ॥ अथनक्षत्राणि ॥ मृगा
दिपंचस्वपिभेषुमूलेहस्तादिकेचत्रितयेश्विनीषु ॥ पूर्वात्रयेचश्रवणत्रयेचविद्यासमारंभमुशंतिसिध्यै ॥ विद्यारंभेशुभःप्रोक्ता
जीवज्ञासितवासराः ॥ मध्यमौसोमसूर्यौचनिंद्यश्चैवशनिःकुजः ॥ अथोपनयनं ॥ मनुः ॥ गर्भाष्टमेब्देकुर्वीतब्राह्मणस्योपना
यनं ॥ गर्भादेकादशेराज्ञोगर्भात्तुद्वादशेविशः ॥ उपनयनकर्ता ॥ पितैवोपनयेत्पूर्वंतदभावेपितुःपिता ॥ तदभावोपितृ
भ्रातासकुल्योगोत्रजोगुरुः ॥ इदंदूरस्थितविषयं ॥ स्मृत्यर्थसारे ॥ औरसःपुत्रिकापुत्रःक्षेत्रजोगूढजस्तथा ॥ कानीन
श्चपुनर्भूजोदत्तःक्रीतश्चसप्तमः ॥ दत्तात्माचसहोढाजस्त्वपविद्धःसुतस्तथा ॥ एतेद्वादशपुत्राश्चसंस्कार्याःस्युर्द्विजातयः ॥
॥ ज्योतिःशिरोमणौ ॥ द्विपंचसप्तनवमस्थितोजीवःशुभप्रदः ॥ व्रतबंधेतुपुत्रस्यकन्यायाश्चकरग्रहे ॥ वृद्धवसिष्ठः ॥
॥ आचार्यस्यबलंश्रेष्ठंबटोरंसाष्टमोयादि ॥ नविचार्यबलंतत्रकारयेदुपनायनं ॥ अथआचार्यः ॥ मुख्यकालस्तुबलवान्न
तेगोचरवृत्थितः ॥ कालातिक्रमणेचैवव्रतशुद्धिंनचिंतयेत् ॥ अथोपनयनेप्रतिबंधः ॥ नांदीश्राद्धेकृतेपश्चादुल्कापाताग्निवृ
ष्टिषु ॥ सूतकादिनिमित्तेषुनकुर्यान्मौंजिबंधनं ॥ अथमातरिरजस्वलायांनिर्णयः ॥ प्रचेताः ॥ यस्यमांगलिकंकार्यंयस्यमा
तारजस्वला ॥ तदानतत्प्रकर्तव्यंमायुःक्षयकरंहितत् ॥ नांदीश्राद्धेकृतेपश्चात्मातायदिरजस्वला ॥ मौंजिबंधंनकुर्वीतगार्ग्य

स्यवचनंतथा ॥ षट्त्रिंशन्मते ॥ मात्रासहैवभुंजीतऊर्ध्वंमातारजस्वला ॥ व्रतबंधःप्रशस्तस्यादित्याहभगवान्यमः ॥ नांदीश्राद्धेकृतेपश्चात्कन्यामातारजस्वला ॥ कन्यादानंपिताकुर्यादित्यांगिरसभाषितं ॥ अथअनुप्रवचनं ॥ उपनीतोहिकुर्वीतसायंसंध्यामुपक्रमात् ॥ अग्निकार्यंततःकुर्यादौपनायनिकानले ॥ अथब्रह्मचारीनियमः ॥ क्षारादिवर्जमश्नीयाद्ब्रह्मचारीदिनत्रयं ॥ अधःशायीचतुर्थेन्हिमेधाजननमाचरेत् ॥ मेखलामजिनंदंडंवस्त्रंयज्ञोपवीतकं ॥ पालाशसंनिधौत्याज्यंनवान्यानिच धारयेत् ॥ स्मृत्यर्थसारे ॥ सदाधार्यंद्विजैश्श्लक्ष्णंकौपीनंकटिसूत्रकं ॥ कौपीनमहतेधार्यंखंडंवावस्त्रपार्श्वयुक् ॥ कौपीनं कटिसूत्रंचयत्तेस्याद्ब्रह्मचारिणः ॥ ग्राह्यंनैवग्रहस्थस्यश्रौतेस्मार्तेचकर्मणि ॥ अथमहानाम्नी ॥ नवामौंजीनवंदंडंदत्वास्विष्टकृताद्यथा ॥ संवत्सरंचरेदेतत्पूर्णाब्देतूत्तरायणे ॥ अथोपाकर्मकारिका ॥ अध्यायानामुपाकर्मश्रावण्यांश्रवणेनतत् ॥ ॥ तन्मासेहस्तसंयुक्तंपंचम्यांचतदिष्यते ॥ शाकलः ॥ मासद्वयमुपाकर्मनभवेद्यादिवैतदा ॥ आषाढश्रावणेकुर्यात्थस्तेवा कर्कटेरवौ ॥ संक्रांतौग्रहणेचैवमूढयोर्गुरुशुक्रयोः ॥ उपाकर्मनकर्तव्यंमृतकेसूतकेपिच ॥ गर्गः ॥ अर्धरात्रादधस्ताच्चेत्संक्रांतिर्ग्रहणंभवेत् ॥ उपाकर्मनकर्तव्यंपरतश्चेन्नदोषभाक् ॥ गुरुभार्गवयोर्मौढ्येबाल्येवावार्धकेपिवा ॥ तथाधिमासेसंप्राप्ते मलमासादिषुद्विजः ॥ प्रथमोपाकृतिर्नस्यात्कृतंचापिविनाशकृत् ॥ प्रसाद्धिकंतुयत्कर्मक्रियामाणंनदुष्यति ॥ अथोत्सर्जनं ॥ मनुः ॥ पुष्येतुछंदसांकुर्याद्बहिरुत्सर्जनंबुधः ॥ माघस्यशुक्लपक्षेवापूर्वाण्हेप्रथमेहानि ॥ उत्सर्जनंभवेत्तच्चेदुक्तकालेन वैयदि ॥ उपाकरणकालेतुकुर्यादुत्सर्जनंबुधः ॥ अथअनध्यायाः ॥ पक्षद्वयचतुर्दश्यावष्टमीद्वेतथैवच ॥ प्रतिपद्देदर्शपू

अयनेविषु
र्णाविनध्यायाःप्रकीर्तिताः ॥ चातुर्मास्यद्वितीयासुयुगमन्वंतरादिषु ॥ अष्टकासुचसर्वासुतथासोपपदासुच ॥ अयनेविषु
वचैवश्रवणेद्वादशीतथा ॥ शयनीबोधनीचैवद्वादशीःपरिकीर्तिताः ॥ द्वितीयाप्रेतपक्षस्यसाभवेत्प्रेतसंज्ञका ॥ आ-
श्विनस्यतुयाशुक्लाद्वितीयाप्रेतसंज्ञका ॥ भरणीप्रेतपक्षस्याद्वितीयापितथैवच ॥ अनध्यायास्त्विमेप्रोक्ताइतिनिसामहर्षिभिः ॥
॥ अथनैमित्तिकमाह ॥ शंकाचतुर्दशीचैवतथाचाख्याचतुर्दशी ॥ नद्यांतेभूमिचलनेज्योतिषांचोपमार्जने ॥ एतानका
लिकान्विद्यादनाध्यामृतावपि ॥ चातुर्मास्यद्वितीयाआह ॥ शुचावूर्जेतपस्येचयाद्वितीयाविधुक्षये ॥ चातुर्मास्यद्वितीया
स्ताःप्रवदंतिमहर्षयः ॥ अथयुगादयः ॥ माघेपंचदशीकृष्णानभस्येचत्रयोदशी ॥ तृतीयामाधवेशुक्लानवम्यूर्जेयुगादयः ॥
॥ अथमन्वादयः ॥ आश्वयुक्शुक्लनवमीद्वादशीकार्तिकीसिता ॥ तृतीयाचैत्रमास्यसिताभाद्रपदस्यच ॥ श्रावणस्याष्ट
मीकृष्णापौषस्यैकादशीसिता ॥ सिताषाढस्यदशमीमाघमासस्यसप्तमी ॥ श्रावणस्याप्यमावास्याज्येष्ठेपंचदशीसिता ॥
॥ आषाढीकार्तिकीमाघीचैत्रीमन्वादयस्मृताः ॥ अथाष्टकाः ॥ मार्गेपौषेतथामाघेनभस्येफाल्गुनेतथा ॥ कृष्णपक्षेष्टका
स्तिस्रःसप्तम्यादियथाक्रमं ॥ अथसोपपदाः ॥ ज्येष्ठशुक्लद्वितीयाचद्याश्विनीदशमीसिता ॥ चतुर्थीद्वादशीमाघेएताःसोप
पदाःस्मृताः ॥ माघकर्कटसंक्रांतीद्वेउदग्दाक्षिणायने ॥ अथचैवतुलामेषौविषुवौतौप्रकीर्तितौ ॥ चतुर्दश्यांयदादीपंप्रा
गस्ताद्दश्यतेरवेः ॥ अनध्यायंप्रकुर्वीतत्रयोदश्यांतुसर्वदा ॥ अथप्रदोषः ॥ षष्ठीचद्वादशीचेत्स्यादर्धरात्रादयोयदि ॥ नवना
ड्यस्तृतीयाचेत्प्रदोषोमुनिभिस्मृतः ॥ अथगोदानं ॥ गोदानंस्नातकंचैवसमावर्तनकंतथा ॥ चौलोपनयनंचैवनकुर्यादार्क्षि

णायने ॥ अथसमावर्तनं ॥ अथैतान्युपकल्पयीतेतिसूत्रं ॥ कारिकोक्तंचमधुपर्कादिस्त्रसूत्रोक्तंसर्वंकार्यं ॥ मनुः ॥
॥ गुरुणानुमतःस्नात्वासमावृत्तोयथाविधि ॥ उद्वहेतद्विजोभार्यांसवर्णांलक्षणान्वितां ॥ यस्यास्तुनभवेद्भ्राताताविज्ञायेतवा
पिता ॥ नोपयच्छेत्तुतांप्राज्ञःपुत्रिकाधर्मशंकया ॥ समानप्रवरांकन्यांसपिंडांचैकगोत्रजां ॥ नैवतांवरयेत्प्राज्ञोमातृवत्परिकी
र्तिता ॥ वाग्दानंचप्रदानंचवरणंपाणिपीडनं ॥ सप्तपदीतिपंचांगोमुनिभिःपरिकीर्तितः ॥ अथवेदिः ॥ हस्तोच्छ्रिता
चतुर्हस्ताचतुरस्रासमंततः ॥ स्तंभैश्चतुर्भिःसंयुक्ताविवाहेवेदिकास्मृता ॥ वृद्धमनुः ॥ एकत्वंसंगताभर्तुःपिंडेगोत्रेचसूतके ॥
॥ स्वगोत्राद्भ्रश्यतेनारीविवाहात्सप्तमेपदे ॥ ग्रहप्रवेशहोमंतुहोमंवैतानिकंचाहि ॥ एकतंत्रेणवाकुर्यादेकस्मिन्ननलेपिवा ॥
॥ अथरात्रिभागः ॥ रात्रिंत्रिभागंकुर्वीतद्वौभागौपूर्ववासरे ॥ भागमेकंपरेन्हिस्याद्विवाहेसूतकेऋतौ ॥ विवाहोपासनात्पू
र्वमनलेशांतिमागते ॥ परिणीयादिकंकृत्वाहोमशेषंसमाचरेत् ॥ अथऋतुमतीविचारः ॥ प्रयोगपारिजाते ॥ विवाह
होमेप्रक्रांतेकन्यायदिरजस्वला ॥ त्रिरात्रंदंपतीस्यातांपृथक्शय्यासनासने ॥ चतुर्थेहनिसुस्नातातस्मिन्नग्नौयथाविधिः ॥
॥ विवाहहोमंकुर्यात्तुकन्यादानादिकंतथा ॥ चतुर्थमध्येकन्याचेभवेद्यदिरजस्वला ॥ त्रिरात्रमशुचिस्त्वेकाचतुर्थेहनिशुध्य
ति ॥ अथचतुर्थी ॥ चतुर्थीमध्येज्ञायंतेदोषायदिवरस्यचेत् ॥ दत्तामपिपुनर्दद्यात्पितान्यस्मैविदुर्बुधाः ॥ आचार्यः ॥
॥ प्रवरैक्यादिदोषाःस्युःपतिसंगादधोयदि ॥ दत्तामपिहरेद्दद्यादन्यस्मैइतिकेचन ॥ हेमाद्रौ ॥ कलौतुपुनरुद्वाहंवर्जयेदि
तिगालवः ॥ कस्मिंश्चिद्देशइच्छंतिनतुसर्वत्रकिंचन ॥ इतिपुनरुद्वाहः ॥ ग्रहप्रवेशः ॥ विवाहमारभ्यवधूप्रवेशोमध्येशुभःषो

डशवासरस्य ॥ निषिद्धवारास्तिथियोगदोषोनतत्रचैवंमुनयोवदंति ॥ आषोडशदिनादर्वाङ्नववध्वाःप्रवेशने ॥ तिथिवा
सरताराणांदोषस्तत्रनविद्यते ॥ वधूप्रवेशोनादिवाप्रशस्तोनृपप्रवेशोनानिशिप्रशस्तः ॥ दिवाचरात्रौचगृहप्रवेशोसंकीर्तितः
स्यात्त्रिविधप्रवेशः ॥ अथदेवकोत्थापनं ॥ समेचदिवसेकुर्याद्देवकोत्थापनंबुधः ॥ षष्ठंचविषमंनेष्टंमुक्त्वापंचमसप्तमौ ॥
॥ स्मृत्यर्थसारे ॥ वरेदेशांतरगतेत्रीनृतून्संप्रतीक्ष्यवै ॥ कन्यान्यस्मैप्रदातव्यावाग्दानेचकृतेसति ॥ पंचत्वंचनरोगच्छेद्वा-
ग्दानेयदिवैकृते ॥ कन्यान्यस्मैप्रदातव्यातथासप्तपदात्पुरा ॥ कृतेसप्तपदेभर्तुःवियोगोयदिजायते ॥ नदेयापुनरन्यस्मैक-
लौकन्यामनीषिभिः ॥ अथप्रतिकूलंस्मृतिचंद्रिकायां ॥ कृतेवाङ्निश्चयेपिस्यान्मृत्युर्भस्यगोत्रिणां ॥ तदानमंगलंकार्यं
नारीवैधव्यदंध्रुवं ॥ प्रतिकूलेकालमाह ॥ पितुर्मातुश्चकन्यायाश्चवर्षमर्धंतदर्धकं ॥ सुतभ्रात्रोःसार्धमासमन्येषांमाससंमितं ॥
तदंतेशांतिकंकृत्वायथोक्तेनविधानतः ॥ पुनश्चैवाथवाग्दानंकृत्वालग्नंविधीयते ॥ पितरिमृतेनिषेधः ॥ मृतेजनन्यांजनकेवर्षं
वर्षार्धमेवच ॥ नकुर्याच्छुभकर्माणिकुलधर्मास्तथैवच ॥ पितुरब्दमिहाशौचंषण्मासंमातुरेवच ॥ मासत्रयंतुभार्यायास्तदर्धंभ्रातृपु-
त्रयोः ॥ अन्येषांतुसपिंडानांमासमेकमुदाहृतं ॥ उक्तकालविधिर्यावत्तावन्नैवशुभाःक्रियाः ॥ दशाहानंतरंप्रोक्तमाशौचं
यद्द्विजन्मनां ॥ शुभार्थमेवजानीयात्कृतेपिहिसपिंडने ॥ यावदाशौचमारभ्यसपिंडीकरणंभवेत् ॥ विवाहादीनिसर्वाणिशु-
भकार्याणिवर्जयेत् ॥ मृतेपित्तरियस्याथमृतायांवापिमातरि ॥ नकुर्याच्छुभकर्माणिवर्षंवर्षार्धमेवच ॥ व्रतबंधंविवाहंचनकु-
र्याच्छोभनंसुतः ॥ वर्षंवर्षार्धकंचैवकृतेपिहिसपिंडने ॥ विवाहादिप्रकुर्वीतयदामहतिसंकटे ॥ सपिंडीकरणादूर्ध्वंमासिका

न्यपकर्प्यंच ॥ कन्यायाश्चातिकालश्चेद्वरस्यापिभवेद्यदि ॥ तस्योद्वाहेनदोषोस्तितथाचौलोपनायने ॥ शुभकर्माणिकार्याणि निवृत्तेसूतकेहितु ॥ इत्युक्तंतत्सपिंडानांकेचिदिच्छंतिमानवाः ॥ व्याघ्रः ॥ प्रेतक्रियामनिर्वर्त्यनकुर्याच्छोभनक्रियां ॥ विधि र्भवेत्सपिंडानांनापरेषामयंविधिः ॥ अथविवाहादिसूतकोत्पत्तिः ॥ चौलेचैवोपनयनेविवाहेचमहामखे ॥ त्रिषड्दशैकविंशत्या प्रारंभेनास्तिसूतकं ॥ तथाच ॥ एकविंशत्यहर्यज्ञेविवाहेदशवासराः ॥ त्रिषट्चौलोपनयनेनांदीश्राद्धंपुरोदिने ॥ प्रारंभो वरणंयज्ञेसंकल्पोव्रतसत्रयोः ॥ नांदीश्राद्धंविवाहादौश्राद्धेपाकपरिक्रिया ॥ व्रतयज्ञविवाहेषुश्राद्धेहोमेजपार्चने ॥ प्रार ब्धेसूतकंनस्यादनारब्धेतुसूतकं ॥ प्रारंभादूर्ध्वमाशौचेविवाहःकार्यएवतु ॥ व्रतादौसूतकेचैवप्रारंभेनास्तिसूतकं ॥ वृद्धशौ नकः ॥ ऋत्विग्नांदीक्षितानांचयज्ञियंकर्मकुर्वतां ॥ कर्मणिक्रियमाणेतुमध्येचेत्सूतकंभवेत् ॥ यावत्कर्मसमाप्तिःस्यात्ताव न्नाप्नोतिसूतकं ॥ विनानेसेकमन्येपुकर्मस्वाशौचमिष्यते ॥ विश्वरूपनिबंधः ॥ विवाहादिषुमध्येचेत्सूतकेसतिचांतरा ॥ ॥ पूर्वसंकल्पितद्रव्यंदीयमानंनदुष्यति ॥ विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके ॥ शेषमन्नंपरैर्देयंदाताभोक्ताचनस्पृशेत् ॥ ॥ सूतकेपिचग्राह्याणि ॥ नांदीश्राद्धेकृतेचैवयावन्मातृविसर्जनं ॥ दर्शश्राद्धंक्षयश्राद्धंस्नानंसीतोदकेनच ॥ अपसव्यंस्व धाकारंनित्यश्राद्धंतथैवच ॥ ब्रह्मयज्ञंचाध्ययनंनदीसीमातिपातनं ॥ उपवासंव्रतंचैवश्राद्धभोजनमेवच ॥ नैवकुर्युःसपिं डाश्चमंटपोद्वासनावधि ॥ मंटपोद्वासनात्पूर्वंनांदीश्राद्धेकृतेयदि ॥ येकुर्वंतिनरामोहादपमृत्युंव्रजंतिते ॥ सपिंडानैवकुर्वीर न्नैकग्रामेगृहेपिच ॥ नैवदेशांतरेदोषःस्वधाकारोभवेद्यदि ॥ नांदीश्राद्धेकृतेचैवापित्रोःश्राद्धेकृतेपिच ॥ मोहादुपवसेद्य

स्तु नरकंप्रतिपद्यते ॥ पित्रोःप्रसब्दिकेप्राप्तेनांदीश्रात्धंनकारयेत् ॥ यदिमोहाद्द्विजःकुर्यान्मांगल्यमशुभंभवेत् ॥ सपिंडा
नैवकुर्वीरनिति ॥ अथवर्ज्यानाह ॥ स्नानंसचैलंतिलमिश्रकर्मप्रेतानुयानंकरकप्रदानं ॥ अपूर्वतीर्थामरदर्शनंचविवर्जयेन्मं
गलमद्धमेकं ॥ मासषट्कंविवाहादिव्रतप्रारंभणंनरः ॥ जीर्णभांडादिनत्याज्यंगृहसंमार्जनंतथा ॥ ऊर्ध्वंविवाहात्पुत्रस्यत-
थाचव्रतबंधनात् ॥ आत्मनोमुंडनंचैववर्षंवर्षार्धमेवच ॥ विवाहोपनयादूर्ध्वंवर्षंवर्षार्धमेवच ॥ नदद्यान्करकान्पिंडान्न
तिलैरर्चयेत्पितॄन् ॥ वृत्थैरपिचकर्तव्यंमातापित्रोर्मृतेहनि ॥ पिंडनिर्वापणंकार्यंपितृव्यादेरपिंडनं ॥ मातापितॄणामद्धेतु
विवाहादिषुसर्वदा ॥ तिलपिंडैस्तुकर्तव्यमन्यश्रात्धेविवर्जयेत् ॥ स्मृत्यंतरेविस्तरोज्ञेयः ॥ अथैकोदरीविवाहः ॥ प्रत्युद्वा
होनैवकार्यश्चैकस्मिन्दुहितृद्वयं ॥ नचैकजन्ययोःपुंसोर्विवाहंचोपनायनं ॥ एकजन्येतुकन्येद्वेपुत्रयोर्नैकजन्ययोः ॥ कन्ये
द्वेतुनचैकस्मिन्प्रदद्यात्तुकदाचन ॥ एकमातृप्रसूतानामेकस्मिन्वत्सरेयादि ॥ विवाहान्नैवकुर्वीतवदंतिमुनयोन्यथा ॥ ज्योतिः ॥
॥ एकोदरप्रसूतानामेकस्मिन्नेववत्सरे ॥ नकुर्यान्मंगलंत्रीणिविवाहंचोपनायनं ॥ चकाराच्चौलं ॥ एकस्मिन्मंटपेप्येकोन-
कुर्यान्मंगलत्रयं ॥ यदिभिन्नोदराणांस्यात्समाप्येकंपुनर्भवेत् ॥ भिन्नोदराणामेकस्मिन्नकुर्यान्मंटपेपिता ॥ समाप्यमंगलंचै
कंपुनःकुर्याच्चनांदिकं ॥ अथयामलेज्योतिः ॥ एकस्मिन्वत्सरेचैववासरेपिचमंटपे ॥ कर्तव्यंमंगलंस्वस्रोर्भ्रात्रोर्यमलजातयोः ॥
॥ संकटे ॥ तथाचस्मृतिः ॥ नचैकजन्ययोःपुंसोर्विवाहस्त्वेकवत्सरे ॥ अद्धभेदेशुभंकेचित्प्राहुर्महातिसंकटे ॥ कृतेचौलो
पनयनेभवेद्यावद्दिनत्रयं ॥ कन्यादानंनकर्तव्यमत्राहुरितिसूरयः ॥ व्रतबंधनमेकस्यतथैकस्यविवाहकं ॥ एकस्मिन्नपिवा

न्यस्मिन्दिनेकुर्यात्तुवैपिता ॥ मध्येचेद्व्रतबंधस्यविवाहोयदिवाभवेत् ॥ अभिलाषोमुहूर्तस्यकन्यायावावरस्यच ॥ कन्या विवाहमध्येचेद्विवाहस्यात्सुतस्यतु ॥ पितैवतुतदाकुर्यादितिकैश्चिदुदीरितं ॥ इत्थंभवेद्यदातत्रकथंस्यान्मातृपूजनं ॥ नांदी- श्राद्धंभवेदेकंहोममंत्राःपृथक्पृथक् ॥ सारावल्यां ॥ चौलंमुंडनमेवोक्तंवर्जयेद्वरणात्परं ॥ ऋतुत्रयंपुनर्यावन्नकुर्याल्लघुमंग लं ॥ कुलेऋतुत्रयादर्वाङ्मंडनान्नतुमंडनं ॥ प्रवेशेनिर्गमःपश्चान्नकुर्यान्मंगलत्रयं ॥ पुनर्विवाहोर्ध्वमृतुत्रयेपिविवाहकार्यंदुहि तुश्चकुर्यात् ॥ नमुंडनाद्यापिहिमुंडनंचगोत्रैकतायांयदिनाब्दभेदः ॥ कुलेऋतुत्रयादर्वाङ्मंडनानतुमुंडनं ॥ अब्दभेदेपिकु र्वीतमंडनान्मुंडनंभवेत् ॥ पुत्रोद्वाहान्नैवपुत्रीविवाहस्यादृतुत्रये ॥ अब्दांतरामुंडनंचनैकदामुंडनद्वयं ॥ फाल्गुनेचैत्रमासेतुपु त्रोद्वाहोपनायने ॥ अब्दभेदेनदोषस्यादित्याचार्योब्रवीद्यथा ॥ गर्गः ॥ दोषस्यादूर्ध्वमुद्वाहात्कुलेचेदुपनायनं ॥ नदोषःपु रुषोद्वाहादूर्ध्वंकन्याविवाहके ॥ व्याघ्रः ॥ पुत्रोद्वाहात्परंदोषोदुहितुःस्याद्विवाहिके ॥ नैवदोषःसपिंडेपुनदोषोभिन्नमातृ के ॥ भृगुः ॥ फाल्गुनेचेद्विवाहस्याच्चैत्रेचैवोपनायनं ॥ अब्दभेदाच्चकुर्वीतनर्तुत्रयविलंघनं ॥ अथपरिवेत्तादि ॥ स्मृत्यर्थ सारे ॥ पितृव्यपुत्रेसापत्नेवरदारासुतादिषु ॥ विवाहाधानयज्ञादौपरिवेत्तादिदूषणं ॥ पंढांधबधिरस्तब्धजडगद्गदपंगुषु ॥ ॥ कुष्ठवामनरोगार्त्तशुष्कांगविकलांदिषु ॥ स्तब्धेपुंस्त्वेनरहितेशयनस्थेनिरिंद्रिये ॥ मूकोन्मत्तेषुसर्वेषुनदोषःपरिवेदने ॥ ॥ कन्याविषयेप्रयोगपारिजाते ॥ एकमातृप्रसूतानांपुत्रिणांपरिवेदने ॥ दोषस्यात्सर्ववर्णेषुनदोषोभिन्नमातृषु ॥ विवाहा नाधिकारस्याज्ज्येष्ठकन्यास्थितायदा ॥ तदनुज्ञांविनावापिकनिष्ठामुद्वहेत्तदा ॥ कालप्रतीक्षणंनस्याद्रजोदोषेनदोषभाक् ॥

॥ परिवित्तोभवेद्यस्तुपातितःकन्यकापिच ॥ अथासंस्कृतकन्यारजोदोषविचारः ॥ स्मृत्यर्थसारे ॥ असंस्कृतातुयाकन्या
रजसातुपरिप्लुता ॥ भ्रातरःपितरस्तस्याःपतिताःस्युर्नसंशयः ॥ इतिहासे ॥ पितुर्गृहेतुयाकन्यारजःपश्यत्यसंस्कृता ॥
॥ साकन्यावृषलीज्ञेयातत्पतिर्वृषलीपतिः ॥ अथस्त्रीणांरजोदोषविचारः ॥ रागजंरोगजंचैवकालजंद्रव्यजंतथा ॥ स्त्रीणां
चैवरजःप्रोक्तंकालजंदोषकृद्भवेत् ॥ अकालेयदिचेत्स्त्रीणांतद्रजोनैवदुष्यति ॥ पंचाशद्वर्षादूर्ध्वंनदोषः ॥ याज्ञवल्क्यः ॥
॥ रजस्रावेतुनारीणांरजोदोषोदिनत्रयं ॥ चतुर्थदिवसेस्नातास्पर्शनादावनिंदिता ॥ शुत्थाभर्तुश्चतुर्थेन्हिस्नानेनस्त्रीरजस्व
ला ॥ दैवेकर्मणिपित्र्येचपंचमेहनिशुध्यति ॥ अष्टादशाहेयदिचेदिनद्वयमेकोनविंशेत्रिदिनंततःपरं ॥ रजोयुताष्टादशवास
रेपुनःप्रायेणयायौवनशालिनीवधूः ॥ त्र्यहेणसाशुध्यतिदैवपित्र्ययोरजोनयुक्तंशुचिमाप्लवेसाति ॥ रजस्वलायदिस्नातापुनरेवर-
जस्वला ॥ अष्टादशदिनादर्वागशुचित्वंनविद्यते ॥ ऋतुकालेव्यतीतेतुयदिनारीरजस्वला ॥ तत्रस्नानेनशुद्धिस्स्यादष्टादश
दिनात्परं ॥ दिनाच्चेत्षोडशादर्वाङ्नारीयाचातियौवना ॥ पुनारजस्वलापिस्याच्छुध्यास्नानेनकेचन ॥ रात्रेःकुर्यात्त्रिभागास्तु
द्वौभागौपूर्ववासरे ॥ ऋतौसूतेमृतेचैवज्ञेयोंसांशःपरेहनि ॥ अन्यःपक्षः ॥ रात्रावेवसमुत्पन्नेमृतेरजसिसूतके ॥ पूर्वमेवादिनं
ग्राह्यंयावन्नोदयतेरविरिति ॥ कश्चिदेशाचारमाह ॥ अथद्वितीयविवाहनिमित्तंस्मृत्यर्थसारे ॥ अप्रजांदशमेवर्षेस्त्री
प्रजांद्वादशेत्यजेत् ॥ मृतप्रजांपंचदशेसद्यस्त्वप्रियवादिनीं ॥ स्मृत्यंतरे ॥ व्याधितास्त्रीप्रजावंध्यात्युन्मत्ताविगतार्तवा ॥
॥ अदुष्टालभतेत्यागंतीर्थतोनतुधर्मतः ॥ तीर्थतोयोनितइत्यर्थः ॥ अग्निस्त्विष्टादिशुश्रूषांबहुभार्यःसवर्णया ॥ कारयेत्तद्बहुत्वे

चज्येष्ठयागर्हितानचेत् ॥ सुरूपांसुप्रजांचैवसुभगामात्मनःप्रियां ॥ धर्मानुचारिणींभार्यांनत्यजेद्द्विजसत्तमः ॥ अथाग्निसंयोगः ॥ जीवत्यांज्येष्ठपत्न्यांचकथंस्त्रीपुनरुद्वहेत् ॥ कृत्वामंगलसूत्रांतंमधुपर्कादिपूर्ववत् ॥ सर्वंकनिष्ठभार्यायाहवनंतत्रचैवहि ॥ कनिष्ठभार्यायाःसर्वंवैवाहिकंहवनंचज्येष्ठभार्याग्नौकुर्यादित्यन्वयः ॥ विधिवज्ज्येष्ठभार्याग्नौकुर्याद्वैवाहिकंचयत् ॥ तदभावेलौकिकाग्नौसर्वंवैवाहिकंभवेत् ॥ वक्ष्येहमग्निसंयोगंपत्न्योर्ज्येष्ठकनिष्ठयोः ॥ निदध्याज्ज्येष्ठभार्याग्निंस्थंडिलेदक्षिणेचतं ॥ तदुत्तरेकनिष्ठाग्निंस्थंडिलेतंनिधायच ॥ पृथक्स्थंडिलयोरग्निसमाधाययथाविधि ॥ तंत्रंकृत्वाज्यभागांतमन्वाधानादिकंततः ॥ जुहुयाज्ज्येष्ठभार्याग्नौसमन्वारब्धआहुतीः ॥ अग्निमीळइत्यादिभिर्होमः ॥ स्विष्टकृतादिसमाप्याग्निंसमारोप्य ॥ सामिध्याग्निंसमारोप्य अयंतेयोनिइत्यृचा ॥ प्रत्यवरोहेत्यनयाकनिष्ठाग्नौनिधायतं ॥ आज्यभागांतंमंत्रादिकृत्वारभ्यतदादितः ॥ अग्नावग्निश्चरति०इत्यादि ॥ अथोपासनातीतप्रायश्चित्तं ॥ कारिका ॥ नित्यहोमेत्वतिक्रांतेसंस्कृत्याग्निंचपूर्ववत् ॥ चतुष्कृत्वागृहीताज्यंमनस्वत्याजुहोत्यथ ॥ अर्वाक्त्रिरात्राज्जुहुयादयाश्चेदासप्तरात्राच्चमनस्वतींच ॥ एकादशाहेसहतंतुमत्यास्याद्वादशाहेध्रुवमाग्निनाशः ॥ सूतकांतरितेवन्हौमनोयाभूर्भुवःस्वरों ॥ मध्येपर्वाणिसंप्राप्तेपुनःसिद्धिर्विधीयते ॥ आद्वादशादिनादर्वाक्प्रायश्चितंकथंभवेत् ॥ तंत्रंकृत्वाज्यभागांतमयादित्यादिसप्तमं ॥ दिवसाद्वादशादूर्ध्वंकुर्यात्सोमंविवाहवत् ॥ प्रातर्होमोथवासायंप्रमादान्नकृतोयदि ॥ हुत्वान्यात्द्वातिभिश्चाज्यमतीतेष्याहुतीर्हुनेत्द्वाते ॥ अथपुनःसंधानं ॥ श्वोदक्यापतितःशूद्रोरक्तंमूत्रंपुरीषकं ॥ स्पृशेदग्निंसामित्थंचेत्पुनराधानमिष्यते ॥ समिधश्चेत्प्रतप्तायानाशस्याद्युतएववा ॥ पुनराधानमिष्टं

तिकेचिद्यज्ञविदोजनाः ॥ सामित्प्रतापनात्पूर्वमग्निश्चेदुपशाम्यति ॥ पुनराधानवत्कुर्यादयाश्चेत्यादिसप्तकं ॥ इतिपुनराधानं ॥
॥ अथविधुरौपासनं ॥ तदाहुर्वाचापत्नीकोग्निहोत्रमितिश्रुतिः ॥ तथाचस्मृतिः ॥ मृतायामपिभार्यायांवैदिकन्नत्यजेद्बुधः ॥
॥ उपाधिनापिसत्कर्मयावज्जीवंसमाचरेत् ॥ अन्येकुशमयींपत्नींकृत्वातुगृहमेधिनः ॥ अग्निहोत्रमुपासंतियावज्जीवमनुव्रताः ॥
॥ अथविधिमाह ॥ उत्धृत्यसमग्निप्रणवेनचादौप्रसग्निरुपसामित्यृचाहरेत् ॥ निधायपृष्ठादिविसंक्रमेणततस्तुहोमास्तिसृभिःस-
मिद्भिः ॥ लेखादयोनैवचयत्सवितुर्विश्वानिनोध्यानइमेत्रमंत्राः ॥ आरोपणंचाप्यपरोपणंचत्युत्पत्तिरेवविधुरानलस्यां ॥
॥ इत्थंकृत्वाततोहोमंसायंप्रातर्विधीयते ॥ प्रतपेत्सामिधंवापिपाणीवायुगपत्तपेत् ॥ प्रत्यवरोहणंनैवनचैवारोहणंतथा ॥
॥ विधुरस्यविधिःकैश्चिदुक्तोयामितिसूरिभिः ॥ अथमृतभार्यस्यपुनर्विवाहविषयेसंग्रहः ॥ प्रमदामृतवत्सरादितःपुनरुद्वा
हविधिर्यदाभवेत् ॥ विषमेपरिवत्सरेशुभःसमवर्षेतुमृतिप्रदोभवेत् ॥ पत्नीवियोगेप्रथमेचवर्षेनचोद्विवर्षेपुनरुद्वहेत्सः ॥
॥ अयुग्ममासेतुशुभप्रदःस्याद्वशिष्ठगार्ग्यादिपराशराद्याः ॥ इत्यादि ॥ अथार्कविवाहः ॥ अकृत्वार्कविवाहंतुतृतीयां
यदिचोद्वहेत् ॥ विधवासाभवेत्कन्यातस्मात्कुर्याद्विचक्षणः ॥ अर्कसंनिधमागत्यकुर्यात्स्वस्त्यादिवाचनं ॥ नांदिश्राद्धंहि
रण्येनह्यष्टवर्गान्प्रपूजयेत् ॥ इत्यादि ॥ अथपुण्याहवाचनं ॥ द्वात्रिंशदंगुलंदीर्घसमंताच्चतुरस्रकं ॥ रेखेद्वेरेकतःको-
णेइतिकुर्वीतपार्श्वयोः ॥ कोष्ठानिकारयेत्तत्रद्वात्रिंशत्संख्ययान्वितं ॥ पदवत्पार्श्वयोस्तस्यपुरतोगजशुंडवत् ॥ पश्चिमेक-
लशाकारंनिर्मितंब्रह्मणापुरा ॥ तदेवस्वस्तिकंचेतिप्रवदंतिमहर्षयः ॥ इत्यादि ॥ अथषोडशकर्माण्यहभाष्यकारः ॥

॥ गर्भाधानंपुंसवनंसीमंतोजातकर्मच ॥ नामनिष्क्रमणंचान्नप्राशनंचौलकर्मच ॥ तथोपनयनंचैवमहानाम्नीमहाव्रतं ॥
॥ उपनिषच्चगोदानंसमावर्तनकंततः ॥ विवाहांत्येष्टिकंचेतिसंस्काराःषोडशैवतु ॥ एतेवैमुनिभिःप्रोक्ताःकर्तव्याहिद्विजन्म
ना ॥ अथनांदीश्राद्धं ॥ स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मसु ॥ यावद्विवाहःपुत्रस्यतावदेवहितत्सुतः ॥ नांदीश्रा
द्धंपिताकुर्यादाद्येपाणिग्रहेबुधः ॥ अतऊर्ध्वंसुतःकुर्यात्पितॄणांतत्त्रिवैपितुः ॥ मनुः ॥ श्राद्धंतुमातुःपूर्वंस्यापितॄणांतदनंत
रमिति ॥ अथपादप्रक्षालनं ॥ अप्रवाहोदकस्नानमिति ॥ नप्रश्राद्धेनवश्राद्धेसपिंडेप्रेतकर्मसु ॥ तिष्ठतःक्षालनंकुर्या-
दन्यत्रोपविशोद्भवे ॥ श्राद्धेयज्ञेविवाहेचदीक्षायामागतेगुरौ ॥ तिष्ठतःक्षालनंकुर्यान्निराशाःपितरोगताः ॥ विवाहोत्स
वयज्ञेषुश्राद्धेचैवतुसर्वदा ॥ विप्राणामुपविष्टानांपादौप्रक्षालयेत्सदा ॥ पादप्रक्षालनंप्रोक्तंउपविश्यासनेद्विजान् ॥ तिष्ठ-
तांक्षालनंचेत्स्यान्निराशाःपितरोगताः ॥ तिष्ठन्नक्षालयेत्पादादेवेपित्र्येचकर्मणि ॥ देवाहव्यंनगृण्हंतिकव्यंनापितरस्तथा ॥
॥ अथविवाहमासानाह ॥ माघफाल्गुनवैशाखज्येष्ठमासाःशुभावहाः ॥ विवाहेमार्गशीर्षेपिदेवलस्यमतेननु ॥ पौषेतुम
करस्थेर्केचैत्रेमीनगतेरवौ ॥ आषाढेमिथुनादिस्थेकेप्याहुःकरपीडनं ॥ मीनराशिगतेसूर्येविंशतिर्वासरेयदि ॥ विवाहःशु-
भदश्चैत्रेनतुमेषेकदाचन ॥ मार्गेमासितथाज्येष्ठेविवाहंचोपनायनं ॥ ज्येष्ठपुत्रदुहित्रोस्तुयत्नेनपरिवर्जयेत् ॥ नजन्मधिष्ण्ये
नचजन्ममासिनजन्मकालीनदिनेविदध्यात् ॥ ज्येष्ठेनमासिप्रथमस्यसूनोस्तथासुतायाअपिमंगलानि ॥ अथज्येष्ठत्रयं ॥
॥ ज्येष्ठेनज्येष्ठयोःकार्यन्तूनार्योःपाणिपीडनं ॥ तयोरेकतरेज्येष्ठेज्येष्ठमासेपिकारयेत् ॥ ज्येष्ठपंचकमाचार्यस्त्यजेज्ज्येष्ठचतु-

ष्ट्यं ॥ ज्येष्ठत्रयंनिषिद्धंस्याज्ज्येष्ठद्वयंतुमध्यमं ॥ अथवरगुणानाह ॥ ज्योतिःसारे ॥ कुलंशीलंवपुर्विद्यावयोवित्तंस-
नाथतां ॥ गुणाःसप्तवरेयस्मिन्तस्मिन्कन्याप्रदीयते ॥ अंधोमूकःक्रियाहीनोह्यपस्मारीनपुंसकः ॥ दूरस्थःपतितःकुष्ठी
दीर्घरोगीवरोनसः ॥ अथकन्यागुणाः ॥ रूपंशीलंकुलंकांतिवयोवित्तंसनाथतां ॥ यस्यांसप्तगुणावध्वांवृणुयात्तांचबुद्धि
मान् ॥ इतिधर्मप्रवृत्तौगर्भाधानादिपंचदशसंस्कारप्रकरणं ॥ अथसप्तमपंचमयोःसापिंड्यंतत्रसगोत्रमनुराह ॥ लेपभाजश्चतुर्था
द्याःपित्राद्याःपींडभागिनः ॥ पिंडदःसप्तमस्तेषांसापिंड्यंसप्तपौरुषं ॥ अत्रत्रुटिः ॥ अन्यत्रभट्टोजीदिक्षितस्यसापिंड्य
निर्णयेद्रष्टव्यं ॥ गुरोःसगोत्रप्रवरानोद्वाह्याक्षत्रियोर्द्वयोः ॥ सगोत्रोह्यनभिज्ञैश्चविप्रैराचार्यगोत्रजां ॥ असंप्रज्ञातबंधूनामा
चार्यप्रवरास्मृताः ॥ पक्षेचास्मिन्विवाहेपिसगोत्रैःसहनेष्यते ॥ अज्ञानादथवाज्ञानाद्यस्तुवैयदिचोद्वहेत् ॥ समानप्रवरांकन्यां
मातृवत्परिपालयेत् ॥ बौधायनः ॥ सगोत्रप्रवरांकन्यांपरिणीयपतेद्द्विजः ॥ अयंबौधानोक्तेनप्रायश्चितेनशुध्यति ॥
अकामतःपरिणयनेकृच्छ्रं ॥ प्रजोत्पादनेचांद्रायणं ॥ प्रजायाभारद्वाजगोत्रांतर्भावः ॥ कामतःपरिणयनेगुरुतल्पव्रतंचरेत् ॥
प्रजानांचांडालेषुक्षिपेत् ॥ परित्यज्यतांजननीमिवपरिपालयेत् ॥ अत्रापित्रुटिः ॥ भट्टोजिदीक्षितगोत्रप्रवरनिर्णयेद्रष्टव्यं ॥
॥ अथजीवत्पितृकश्रात्धविधिः ॥ अमाश्रात्धंगयाश्रात्धंश्राद्धंचापरपाक्षिकं ॥ नजीवत्पितृकःकुर्यात्तिलैःकृष्णैश्चतर्पणं ॥
अन्यत्सर्वंजीवत्पितृकनिर्णयेद्रष्टव्यं ॥ अथसापत्नमातृविपयंसारावल्यां ॥ एकभर्तृकपत्नीनामपुत्रानिधनंगताः ॥ अन्यस्या
पुत्रवत्वेतुकर्ताभर्तैवतत्रतु ॥ सापत्नजननीयस्यपितुश्चेज्जीवतोमृता ॥ अपुत्रायदिसावापितस्याःकार्याःकथंक्रियाः ॥ एके

नैवप्रकर्तव्यंज्येष्ठपत्नीसुतेनच ॥ जन्मज्येष्ठेनवामातुःसापत्न्याअपिकर्मयत् ॥ कृत्वासौवपनंपुत्रःपित्रोस्तुजीवतोरपि ॥ सापत्न्यमातुःकुर्वीतपैतृमेधिककर्मच ॥ चकारात्प्रतिसांवत्सरादिकुर्यात् ॥ मृतामातरिजीवत्यांसापत्नजननीयदि ॥ पितामह्यादिभिःकुर्यात्प्रत्यब्दंनतुतर्पणं ॥ अथवहुपत्नीकपुत्रविषयं ॥ एकभर्तृकपत्नीनांसर्वासांसंतिवैसुताः ॥ पितुर्मरण कालेतुज्येष्ठपत्नीसुतोग्रजः ॥ अथकर्माधिकारिणःपुत्रानाहयाज्ञवल्क्यः ॥ औरसोधर्मपत्नीजस्तत्समःपुत्रिकासुतः ॥ क्षेत्रजःक्षेत्रजातस्तुसगोत्रेणेतरेणवा ॥ गृहेप्रच्छन्नउत्पन्नोगूढजस्तुसुतःस्मृतः ॥ कानीनःकन्यकाजातोमातामहसुतःस्मृतः ॥ अक्षतायांक्षतायांवाजातःपौनर्भवःसुतः ॥ दद्यान्मातापितावायंसपुत्रोदत्तकोभवेत् ॥ क्रीतश्चताभ्यांविक्रीतःकृत्रिमस्यात्स्व यंसुतः ॥ दत्तान्मातुःस्वयंदत्तोगर्भेदत्तःसहोढजः ॥ उत्सृष्टोगृह्यतेयस्तुसोपविद्धोभवेत्सुतः ॥ पिंडदोषंहरश्चैषांपूर्वाभावे परःपरः ॥ मनुः ॥ एतत्तेभिहिताःपुत्राःप्रसंगादन्यबीजजाः ॥ यस्ययोबीजजोजातस्तस्यतेनेतरस्यतु ॥ प्रयोगपारिजाते ॥ ज्येष्ठएवसुतःकुर्यादविभक्तैःसहानुजैः ॥ पित्रोरेवाब्दिकंश्राद्धमन्येषांतुनतैःसह ॥ प्रत्यब्दंपार्वणेनैवविधिनाक्षेत्रजौरसौ ॥ कुर्यात्तामितरेकुर्युरेकोद्दिष्टंसुतादयः ॥ औरसःपार्वणेनैवपित्रोरेवविधीयते ॥ दत्तपुत्रादयःसर्वेप्येकोद्दिष्टविधानतः ॥ द्व्यामुष्यायणकादद्युर्द्वाभ्यांपिंडोदकेतथा ॥ श्राद्धंकुर्युस्तयोश्चैवपित्रोर्भ्रातृगृहीतयोः ॥ यस्ययोबीजतोजातस्तस्यैवंपार्वणं- स्मृतं ॥ एकोद्दिष्टमथान्येषांविधिरेषउदाहृतः ॥ पितुश्चैवगृहीतुश्चमातुश्चैवतथैवतु ॥ दत्तःकुर्यात्तयोरेवनान्येषांतुकदाचन- ॥ अथान्येधिकारिणः ॥ पुत्रःपौत्रश्चतज्जश्चपुत्रिकापुत्रएवच ॥ पत्नीभ्राताथतज्जश्चपितामातास्नुषातथा ॥ भगिनीभा-

गिनेयश्चसपिंडोधनहार्यपि ॥ एतेष्वभिहिताःकैश्चित्पूर्वाभावेपरःपरः ॥ अथानुपनीताधिकारः ॥ विश्वरूपे ॥ असं-
स्कृतेनपुत्रेणपत्न्यावापिसपिंडनं ॥ अग्निदाहःप्रकर्तव्योह्यन्यत्सर्वंप्रकल्पयेत् ॥ कुर्यादनुपनीतोपिमंत्रवत्पैतृमेधिकं ॥ यद्य
सौकृतचूडस्याद्यदिस्याच्चत्रिवत्सरः ॥ कृतचूडस्तुकुर्वीतत्युदकंपिंडमेवच ॥ स्वधाकारंप्रयुंजीतवेदोच्चारंनकारयेत् ॥
कृतचूडोनोपनीतःपित्रोःश्राद्धंसमाचरेत् ॥ उदाहरेत्स्वधाकारंनतुवेदाक्षराण्यसौ ॥ मनुः ॥ नह्यस्मिन्यूज्यतेकर्मकिंचि
दामौंजिबंधनात् ॥ नाभिव्याहरयेद्ब्रह्मस्वधानिनयनादृते ॥ स्वधानिनयनंप्रेतकार्यमित्यर्थः ॥ पुत्रेसतिनिषेधः ॥ पुत्रे
षुविद्यमानेषुनान्योवैकारयेत्स्वधां ॥ अनुकल्पेदपुत्रस्यश्राद्धंकुर्यात्सनाथकं ॥ प्राणत्यागोभवेद्यत्रतीर्थेवास्वगृहेपिवा ॥
प्रेतकार्याणितत्रैवकुर्यादन्यत्रनैवतु ॥ अथपुत्रविषये ॥ पत्नीकुर्यादपुत्रस्यपुत्रिकापुत्रएववा ॥ कनीयान्भ्रातृजोवापिपू
र्वाभावेपरःपरः ॥ अथवपनविधिः ॥ आचार्यः ॥ निषेधेसत्यपिक्षौरंपित्रोरेवमृतेहनि ॥ वापयेयुःसुताःपित्रोर्मरणश्र
वणेपिच ॥ संवर्तः ॥ गंगायांभास्करक्षेत्रेमातापित्रोर्मृतेहनि ॥ आधानेयज्ञकालेचषट्सुवैवपनंस्मृतं ॥ सेतुबंधश्चगोकर्णं
निवृत्तिःश्रीगिरिस्तथा ॥ विरूपाक्षस्तथाकाशीक्षेत्रंभास्करसंज्ञितम् ॥ मातामहपितृव्याणांमातुलाग्रजयोर्गुरोः ॥ श्वशुराचार्य
योःस्वामीपत्न्योर्वापिपितृष्वसुः ॥ मातृष्वसुर्भगिन्याश्चत्युपाध्यायस्यचैवाहि ॥ एषांकेचिद्बुधाःप्राहुर्गर्भवानपिवापयेदिति
कर्मकर्तृविषयं ॥ तथाचव्याघ्रः ॥ विभक्तावाविभक्तावापित्रोस्तुमरणेसुताः ॥ वपनंकुर्युरन्येषांकुर्यात्कर्तासयोभवेत् ॥
॥ अथप्रथमेहनिकर्ता ॥ सगोत्रोवान्यगोत्रोवायादिस्त्रीयादिवापुमान् ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेत् ॥ अस्थि

संचयनात्पूर्वंपुत्रोयदिसमागतः ॥ तदादिसकलंकर्मपुत्रःकुर्याद्यथाविधि ॥ दहनाग्निविचारः ॥ स्मृतिसारे ॥ दहनंचाहिताग्निस्तुकुर्यात्तेनाग्निनामृतः ॥ अनाहिताग्निविधिवद्दहेदौपासनाग्निना ॥ विधुरंविधवांचैवदहेत्प्रेतंकुशाग्निना ॥ ॥ यतिप्रस्छौकपालाग्नौतुपाग्निर्बालकन्ययोः ॥ आश्वलायनः ॥ आत्मारोपशरीरस्यनविनश्यतिपावकः ॥ ॥ शवदेहेथनष्टेपिदक्षिणःपाणिरस्तिचेत् ॥ लौकिकाग्निस्छापयित्वापाणिंपुत्रेजपेद्यजुः ॥ उपावरोहजातेतितूष्णींमानौन यतिसः ॥ स्याद्बादशगृहीतेनतूष्णींतुजुहुयाद्धृतं ॥ हस्तस्छादप्रपद्येतप्रेतमाद्येतिविक्रियाः ॥ स्नानंप्रेतस्यपुत्राद्यैर्वस्त्राद्यैः पूजयेत्ततः ॥ नग्नदेहंदहेन्नैवकिंचिद्देयंपरित्यजेत् ॥ प्रमादादग्निविच्छित्तिःपत्नीवेत्स्यात्वसंन्निधौ ॥ प्रेतस्यदहनंकुर्यात्कथं पुत्रोथवान्यजः ॥ प्रायश्चित्ताहुतीर्हुत्वापक्षेहोमाहुतीरपि ॥ दहेत्प्रेतंततःपुत्रस्तेनैवौपासनाग्निना ॥ द्विपत्न्यसंसृष्टाग्निविधिः ॥ नभवेदग्निसंयोगःपत्न्योर्जेष्ठकनिष्ठयोः ॥ ज्येष्ठायदिमृतापूर्वमग्निहोत्रेणतांदहेत् ॥ पूर्वमेवहियाभार्याकनिष्ठायदिवामृता ॥ निर्मथ्याग्निंदहेत्तेनवन्हिनाविधिवच्चतां ॥ भार्ययोरग्निसंयोगेजातेज्येष्ठकनिष्ठयोः ॥ यदिकाचिन्मृताभार्या दाहस्तस्याःकथंभवेत् ॥ संसृष्टाग्निंविभज्याथदक्षिणोत्तरयोरपि ॥ ज्येष्ठायादक्षिणोभागःकनिष्ठायास्तथोत्तरः ॥ बहवोयदिभार्याश्चेत्भागास्युस्तादृशाअपि ॥ यस्याएवयथाभागस्तंतंभागंवियोजयेत् ॥ दाहादिकर्मकुर्वीतमंत्रवत्पतृमेधिकं ॥ प्रथमेहनियःपुत्रःसदशाहंसमापयेत् ॥ अथनवश्राद्धानि ॥ प्रथमेन्हितृतीयेन्हिपंचमेसप्तमेतथा ॥ नवमैकादशेचैवनवश्राद्धंप्रकीर्तितं ॥ यदिरात्रौभवेत्तस्यसमाप्तिर्दहनस्यचेत् ॥ परेहन्युदितेसूर्येकार्यास्तस्योदकक्रियाः ॥ तिलोदकंतथापिंडानवश्रा

द्धानियानिच ॥ नकुर्याद्रात्रौसंध्यायांयदिस्यान्निष्फलंभवेत् ॥ उत्तरीयंशिलापात्रंकर्तृद्रव्यविपर्यये ॥ पूर्वदत्तांजलिंदद्या
त्पिंडांश्चापितथैवतु ॥ तत्रमध्येदर्शेविचारः ॥ पित्रोराशौचमध्येतुयादिदर्शःसमागतः ॥ तावदेवोत्तरंतंत्रंपर्यवस्यत्त्र्येहा
त्परं ॥ अंतर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत् ॥ पित्रोस्तुयावदाशौचंदद्यात्पिंडांस्तिलांजलीन् ॥ दशाहमध्येदर्शश्चेत्पिंडदा
नंतिलोदकं ॥ औरसःप्रत्यहंदद्यान्नचदर्शेसमापयेत् ॥ प्रागूर्ध्ववात्र्यहाद्दर्शेदशाहमध्येऔरसः ॥ पितरौतुविनान्येषांदर्शे-
चैवसमापयेत् ॥ दशाहमध्येयादिदर्शआगतेदद्याद्दशाहेतिलवारिपिंडान् ॥ पुत्रीसुतोदत्तकऔरसोवाशेषाःसुतास्तत्रसमापये-
युः ॥ देशांतरस्थितैपुत्रैःक्रियाःकार्यायथाविधि ॥ विभक्तैर्वाविभक्तैर्वासंयुक्तैर्दहनांविना ॥ दशाहाभ्यंतरेपित्रोर्मरणंश्रू
यतेयदि ॥ पुत्रेणैवाथवान्येनमंत्रवह्न्हिदग्धयोः ॥ प्रेतशब्देनशिष्टास्युःकर्तव्यंषोडशादिकं ॥ सपिंडीकरणंचैवयथाका
लसमुद्भवं ॥ मंत्राग्निनैवदग्धस्यपिंडदानोदकांक्रियाः ॥ नकृतास्युःप्रमादाद्वादशाहाभ्यंतरेयादि ॥ अथैकस्मिन्दिनेकर्म
यदाकर्तुमुपक्रमेत् ॥ पिंडोदकक्रियाःकार्याश्चाशौचंदहनंविना ॥ अथास्थिसंचयनं ॥ कुजमंदार्कशुक्रेषुगुरौनंदात्रिपाद-
भे ॥ पूर्वोत्तरापुष्यहस्तेनास्थिसंचयनंचरेत् ॥ त्रिपुष्करं ॥ त्रिपदभातिथिर्भद्राजायतेवासरेगुरौ ॥ रवौभौमेचमुनिभिः
प्रोक्तंतत्रत्रिपुष्करं ॥ नंदाभद्राकामभूतभौमार्करविजेगुरौ ॥ शुक्रेमघायांरोहिण्यांपंचकेद्वित्रिपादभे ॥ भनत्रयंप्रेतदाह
मस्थिसंचयनंतथा ॥ नकुर्याद्यदिचेद्दाहंकृतंदानंप्रदापयेत् ॥ विशाखायाम्यदितिषुपुष्येपूर्वोत्तरात्रये ॥ हस्तेत्त्ववासवेचै
वपुष्येसंचयनंयदि ॥ भद्रेतुभूमिदानंस्याद्धेमदानंत्रिपादभे ॥ वारेतथादिदैवसेवासोदानंविधीयते ॥ विभक्तैरपिप्रेतस्य

श्राद्धमेकमेवकार्यं ॥ तदुक्तमनंताचार्यैः ॥ विभक्तावाविभक्तावाकुर्युश्राद्धमदैवतं ॥ मघासुचततोन्यत्रनाधिकारःपृथग्विधः ॥ अदैवतंनवश्राद्धादिषोडशांतं ॥ नवश्रात्धंसपिंडंचश्राद्धाण्यपिचषोडश ॥ एकेनैवतुकार्याणिसंविभक्तधनेष्वपि ॥ ॥ तथाचमनुः ॥ वृषोत्सर्गसुतःकुर्यात्पित्रोश्चैकादशेहनि ॥ अथवापुण्यकालेतुविधिनावृषमुत्सृजेत् ॥ वृषोत्सर्गसुतोमातुः कुर्यादेकादशेहनि ॥ सहोमंविधिवच्चैवपितर्यपिचजीवति ॥ पतिमत्साःसपुत्रायावृषोत्सर्गसमापयेत् ॥ इतिकेचिद्वदंत्यन्येनकार्यइतिकेचनेतिवृषोत्सर्गः ॥ अथाद्यश्रात्धं ॥ असपिंडक्रियाकर्मद्विजातेःसंस्थितस्यच ॥ अदैवंभोजयेच्छ्राद्धंपिंडमेकंच निर्वपेत् ॥ आद्यश्राद्धमशुद्धोपिकुर्यादेकादशेहनि ॥ कर्तुस्तात्कालिकीशुद्धिरशुद्धःपुनरेवसः ॥ ब्राह्मणंभोजयेदाद्येहोतव्यमनलेपिच ॥ पुनश्चभोजयेद्विप्रद्विरावृतिर्भवेदिति ॥ आद्यादिषोडशश्राद्धंकुर्यादेकादशेहनि ॥ एकोद्दिष्टविधानेन देवहीनंतुतद्भवेत् ॥ आद्यश्राद्धंनकुर्वीतमोहादेकादशेहनि ॥ दाहादिसकलंकर्मपुनःकुर्याद्यथाविधि ॥ सपिंडीकरणं यावत्तावत्स्यादेकमेवहि ॥ विभक्तैर्वाविभक्तैर्वाकार्यंप्रेतक्रियादिकं ॥ अथसपिंडीकरणं ॥ सपिंडीकरणंकुर्यात्सदैवंद्वादशेहनि ॥ तदभावेत्रिपक्षाद्दौह्यथचैकादशेहनि ॥ मृतेपितरियस्याथविद्यतेचपितामहः ॥ तेनदेयास्त्रयःपिंडाःप्रपितामहपूर्वकं ॥ त्रयाणामपिपिंडानामेकेनापिसपिंडने ॥ पितृत्वमश्नुतेप्रेतइतिधर्मोव्यवस्थितः ॥ पितुःपुत्रेणकर्तव्यंपित्रापुत्रस्यनक्वचित् ॥ यदिस्नेहेनवाकुर्यात्सपिंडीकरणंविना ॥ अथव्युत्क्रमः ॥ गालवः ॥ व्युत्क्रमाद्यच्चसापिंड्यंवियोगाद्यच्चकारितं ॥ तत्सापिंड्यंपुनःकुर्याद्व्युत्क्रमाद्यच्चतत्सुतः ॥ पितामहेजीवतिपिताचेन्मृतःसव्युत्क्रमः ॥ पुत्राभावेशाकलः ॥

॥ पुत्राभावेस्वयंपत्नीस्वभर्तृणाममंत्रकं ॥ सपिंडीकरणंकुर्यात्ततःपार्वणमेवच ॥ गालवः ॥ अपुत्रेसंस्थितःकर्तानभवे-
च्छ्राद्धकर्मणि ॥ तत्रपत्न्येवकुर्वीतसापिंड्यंपार्वणंतथा ॥ पार्वणमितिसर्वत्रत्रिपुरुषोद्देशश्राद्धमित्यर्थः ॥ आचार्यः ॥
॥ अपुत्रायांमृतायांतुपतिःकुर्यात्सपिंडनं ॥ श्वश्र्वादिभिःसहैवास्याःसपिंडीकरणंभवेत् ॥ स्मृतिसारे ॥ अपुत्रायोपितःपिं
डंभर्तृपिंडेनियोजयेत् ॥ पत्नौजीवतिचेद्यस्याःश्वश्र्वादिषुनियोजयेत् ॥ कालादर्शे ॥ पत्न्याःकुर्यादपुत्रायापतिर्मात्रादिभिः
सह ॥ सापिंडमनुयातेतुजनकेनसहात्मजः ॥ अथानुगमनेबौधायनः ॥ पिंडत्वनुगतायाश्चभर्तुःपिंडेनयोजयेत् ॥ प्राक्
प्रसग्विभजेद्द्वेधात्वेकैकंविभजेद्विधा ॥ प्राग्भागात्पितृपिंडेपुसंयोज्यविधिवत्ततः ॥ प्रसग्भागांस्तथामातृपिंडेषुचयथाक्रमं ॥
॥ कृतेपिंडादिसापिंड्येमातुःश्राद्धंपृथग्विधाः ॥ अष्टकादौतथामातुःपितामह्यादिभिःक्रमात् ॥ अथब्रह्मचारीसपिंडीक
रणं ॥ गोभिलः सपिंडीकरणंकेचित्कथंस्यात्ब्रह्मचारिणः ॥ वस्वादिपितृरूपेषुयोजयेत्ब्रह्मचारिणं ॥ अथासन्निधा
नेज्येष्ठसपिंडनाविचारः ॥ गोभिलः ॥ ज्येष्ठःसपिंडनंकुर्याद्द्वादशाहेनुजैःसह ॥ यदिचेत्सन्निधौनस्यात्संनिधिस्थोनुजो-
पिवा ॥ व्याघ्रः ॥ ज्येष्ठेनवाकनिष्ठेनकृतंचेदौरसेनयत् ॥ सगुणंस्यात्सापिंडांतमन्येनकृतमन्यथा ॥ आचार्यः ॥ दशाहा
च्चेद्बहिःपित्रोर्मरणंश्रूयतेयदि ॥ कृत्वासौवपनंदद्याद्दर्भग्रंथौतिलोदकं ॥ नोत्तरीयंपिंडदानंनवश्राद्धंनवोदिका ॥ नैवं
कुर्याच्छिलांपात्रंकृतेयस्यसपिंडने ॥ पितृशब्देनतच्छ्राद्धंकुर्यादेकादशेहनि ॥ सपिंडीकरणंनामतंत्रंपार्वणवद्भवेत् ॥
॥ संवर्तः ॥ यवीयसाकृतेश्राद्धेसापिंडीकरणेयदि ॥ कनिष्ठेनापिकर्तव्यंसापिंडीकरणंपुनः ॥ कृतेकनीयसावापिश्राद्धेयस्यस

पिंडने ॥ ज्येष्ठोपिहिसुतःकुर्यात्सपिंडीकरणंपुनः ॥ सपिंडीकरणंनामश्राद्धंपार्वणवद्भवेत् ॥ अर्घ्यसंयोजनंचैवपिंडसंयोजनं नच ॥ द्वितीयादीनिसर्वाणिमासिकान्यपिकारयेत् ॥ निवर्त्यसकलंप्रेतकर्मकालांतरेपिचेत् ॥ ऊनादीनिचसर्वाणिमासिकान्यपिकारयेदितिप्रेतकर्माकृतविषयं ॥ अथासंनिधानपुत्रविषये ॥ शाकलः ॥ पित्रोर्मरणकालेतुनचेत्स्यात्सन्निधौसुतः ॥ अन्यःकुर्याद्दशाहांतंनतुसर्वंकदाचन ॥ तथाचस्मृतिः ॥ देशांतरस्थौपितरौमृतौचेदन्योनकुर्यात्सकलंचपैतृकं ॥ दाहंविनाचाथतिलोदकादिज्येष्ठस्तुकुर्यादनुजैःसपिंडनं ॥ कौशिकः ॥ पुत्रंविनाकृतेन्येनदाहादिप्रेतकर्मणि ॥ प्रेतकर्मपुनःकुर्यादौरसोदहनंविना ॥ गोभिलोपि ॥ अन्येनकेनचित्पित्रोःकृतेपिहिसपिंडने ॥ विनादाहंपुनःकर्मज्येष्ठःकुर्यात्सहानुजैः॥ ॥ अनुमासिकं ॥ सपिंडीकरणंश्राद्धंकृत्वास्याद्धूनमासिकं ॥ नशोधयेदिनंतत्रव्याघ्रस्यवचनंयथा ॥ विधवायाह्यपुत्रायाजीवपत्न्यास्तथैवहि ॥ मासिकानिव्रतस्थस्यनैवोर्ध्वंस्युःसपिंडनात् ॥ व्रतस्थोब्रह्मचारी ॥ त्रिपक्षेद्वादशेपक्षेचतुर्विंशतिपक्षके ॥ पक्षत्रिपंचकेचैवह्यंतमध्यादिपंचके ॥ स्मृतिः ॥ ऊनंस्याद्द्वादशाहेथत्रिपक्षैकादशेदिने ॥ षष्ठाहेद्वादशेपक्षेपक्षादौचतुर्विंशके ॥ ऊनंत्रैपक्षिकंचैवत्वूनषण्मासिकंतथा ॥ ऊनाद्धंप्रतिमासेथकुर्याच्छ्राद्धानिषोडश ॥ प्रतिमासमृताहेतुयावत्संवत्सरंभवेत् ॥ तावदेवहिकुर्वीतश्राद्धंमासिकसंज्ञिकं ॥ सपिंडीकरणादूर्ध्वंसदैवंपार्वणेनतु ॥ मृताहेमासिकंकुर्यात्प्रतिमासेतुवत्सरं ॥ अपकृष्याथवोत्कृष्यमासिकान्येवकारयेत् ॥ त्रीणिचैवार्घ्यपात्राणिपिंडांस्त्रीनेवनिर्वपेत् ॥ सपिंडीकरणादूर्ध्वंयानिश्राद्धानिषोडश ॥ स्वस्वकालेस्युरूनानिनान्यथाद्यंत्रिनैवतु ॥ प्रथमाद्धकर्तव्यं ॥ दर्शश्राद्धंगयाश्राद्धंश्रा-

त्थंचापरपक्षिकं ॥ प्रथमोद्भितुकुर्वीतसपिंडीकरणेकृते ॥ नित्यनैमित्तिकंश्रात्थंतीर्थश्रात्थादिकंचयत् ॥ सपिंडीकरणादू
र्ध्वंपुत्रःकुर्याद्यथाविधिः ॥ सपिंडीकरणोर्ध्वमेकोद्दिष्टमेकोद्दिष्टविधानं ॥ निर्णयार्णवे ॥ सपिंडीकरणादूर्ध्वंपार्वणंयत्प्र-
दीयते ॥ भ्रात्रेभगिन्यैःपुत्रायस्वामिनेमातुलायच ॥ मित्रायगुरवेश्रात्थमेकोद्दिष्टंनपार्वणं ॥ एकोद्दिष्टंकनिष्ठानांज्येष्ठानां
पार्वणंस्मृतं ॥ माधवीये ॥ एकमुद्दिश्ययच्छ्रात्थमेकोद्दिष्टंप्रकीर्तितं ॥ त्रीनुद्दिश्यतुयत्तद्धिपार्वणंमुनयोविदुः ॥ पितृव्य
स्याप्यपुत्रस्यभ्रातुश्चैवाग्रजन्मनः ॥ मातामहानामप्येवंपार्वणंश्राद्धमाचरेत् ॥ एकमातृप्रसूतानामेकश्चेत्पुत्रवान्भवेत् ॥ सर्वे
तेनैवपुत्रेणपुत्रिणोमनुरब्रवीत् ॥ प्रतिसंवत्सरंकार्यमातापित्रोर्मृतेहनि ॥ पितृव्यस्याप्यपुत्रस्यभ्रातुर्ज्येष्ठस्यचैवाहि ॥ सपिं
डीकरणादूर्ध्वमेकोद्दिष्टंभवेद्यदि ॥ सदैवंभोजयेच्छ्रात्थंपिंडमेकंतुनिर्वपेदितिकश्चिद्देशाचारः ॥ अथसंवत्सरविमोकश्रात्थं ॥
॥ तत्राहवृद्धशौनकः ॥ अब्दस्यांतेविमोकाख्यंश्रात्थंप्रथमवत्सरे ॥ कुर्यात्पार्वणवच्चैवव्याघ्रस्यवचनंयथा ॥ संवत्सरवि
मोकाख्यमकृत्वाप्रथमाद्भिकं ॥ यःश्रात्थंकुरुतेमोहात्कृतंप्राकर्मनिष्फलं ॥ प्राकर्मप्रेतकार्यादिकमित्यर्थः ॥ यःकरोतिवि
नापुत्रंश्रात्थंविमोकसंज्ञिकं ॥ मृतश्चेद्यदिकर्तास्यश्रात्थलोपोभवेदिह ॥ पित्रोश्रात्थंविनामातुःसपत्न्याअपिलुप्यते ॥ तन्न
कर्तव्यमन्येननष्टेकर्तरिवैयदि ॥ पित्रोश्रात्थंविनान्येषांनकुर्याच्छ्राद्धमेवहि ॥ कर्तामृतश्चेज्ज्येष्ठस्यादनुजैःकार्यमेवंतु ॥ पि-
त्रोःश्रात्थंविनान्येषांयदिस्नेहेनपार्वणं ॥ एकोद्दिष्टंभवेद्वापिपिंडदानंकृताकृतं ॥ अथपितामहश्रात्थं ॥ पितामहस्ययच्छ्रा
त्थंषोडशादिसपिंडनं ॥ अपुत्रस्यतुकर्तव्यंपौत्रेणप्रथमाद्भिकं ॥ पृथक्प्रसाद्भिकंतस्यवर्षेवर्षेनतद्भवेत् ॥ पित्रासहैवतच्छ्रा

त्संवत्सरादौभवेत्पितुः ॥ तथाचस्मृतिः ॥ पितामहःपितुःपश्चात्पंचत्वंयदिगच्छति ॥ पौत्रेणैकादशाहादिकर्तव्यंश्राद्धषोडशं ॥ नतत्पौत्रेणकर्तव्यंपुत्रवांश्चेत्पितामहः ॥ पितुःसपिंडनंकृत्वाकुर्यान्मासानुमासिकं ॥ अथविभक्तश्राद्धं ॥ तत्रानंताचार्यः ॥ विभक्तास्तुपृथक्कुर्युःप्रतिसंवत्सरादिकं ॥ एकेनैवाविभक्तेषुकृतंसर्वैस्तुतत्कृतं ॥ भ्रातॄणामविभक्तानामेकोधर्मःप्रवर्तते ॥ विभागेसतिधर्मोपिभवेदेषांपृथक्पृथक् ॥ सर्वैरनुमतंकृत्वाज्येष्ठेनैवतुयत्कृतं ॥ द्रव्येणैवाविभक्तेनसर्वैरेवकृतंभवेत् ॥ तथाचस्मृतिः ॥ पित्रोःश्राद्धंपृथक्कुर्युःसंविभक्ताधनेनच ॥ एकत्रयदिकुर्वीरन्पतितास्युर्नसंशयः ॥ अविभक्तश्राद्धं ॥ सापत्न्यभ्रातरःकुर्युरविभक्ताःपृथक्पृथक् ॥ अमावास्यादिकंचैवपितुःप्रत्याब्दिकंविना ॥ संग्रहे ॥ अविभक्ताःसुताःपित्रोरेकःकुर्यान्मृताह्निकं ॥ देशांतरेपृथक्कुर्युर्दर्शश्राद्धानुमासिकं ॥ ग्रामांतरंव्रजेयुश्चेदविभक्ताःसुतायदि ॥ ॥ दर्शंचमासिकंश्राद्धंकुर्युःपित्रोःपृथक्पृथक् ॥ अविभक्ताःपृथग्ग्रामास्वस्वार्जितधनाशनाः ॥ कुर्युस्तेभ्रातरःश्राद्धंमातापित्रोःपृथक्पृथक् ॥ अथमृताहविपर्येस्मृतिः ॥ अज्ञानाद्वाप्रमादाद्वायोमृताहमतिक्रमेत् ॥ श्वानयोनिशतंगत्वाचांडालःस्यात्पुनःपुनः ॥ रजस्वलायांभार्यायांमृताहंयःपरित्यजेत् ॥ सनरोनरकंयातियावदाभूतसंप्लवं ॥ तथाच ॥ मृतस्यवाथकर्तुर्वायदिभार्यारजस्वला ॥ योतिक्रमेन्मृताहंतुरौरवंनरकंव्रजेत् ॥ आब्दिकेसमनुप्राप्तेयस्यभार्यारजस्वला ॥ पंचमेहनितच्छ्राद्धंनतुकुर्यान्मृतेहनि ॥ भार्याकर्त्रीचेत्ताद्विपर्ययं ॥ स्मृतिः ॥ अपुत्रातुयदाभार्यासंप्राप्तेभर्तुराब्दिके ॥ रजस्वलाभवेच्छ्राद्धंकुर्यात्तत्पंचमेहनि ॥ अथान्नश्राद्धविधिः ॥ सपिंड्यामासिकंचैवह्यमावास्यादिकंचयत् ॥ अन्नेनैवतुकर्तव्यंयस्य-

सित्थान्नेनैवकुर्वीतपित्रोःप्रत्याब्दिकादिकं ॥ श्राद्धविघ्ने
भार्यारजस्वला ॥ अपत्निकःप्रवासीस्याद्यस्यभार्यारजस्वला ॥ आपद्यनग्नौतीर्थेचप्रवासेपुत्र-
द्विजातीनामामश्राद्धंप्रकीर्तितं ॥ अमावास्यादिनियतंमाससंवत्सरादृते ॥ अथामश्राद्धं ॥ अमावास्यादिकंश्चै
जन्मनि ॥ आमश्राद्धंद्विजःकुर्यात्पित्रोःप्रत्याब्दिकंविना ॥ तीर्थेनग्नौप्रवासेचश्राद्धमन्नेनकारयेत ॥ दद्याद्यत्र
वकेचिदेवंवदंतिहि ॥ सित्थान्नेतुविधिर्यःस्यादामश्राद्धेप्ययंविधिः ॥ आवाहनादिसर्वस्यात्पिंडदानंतथैवच ॥ उच्छि
द्विजातिभ्यःश्रुतंवाश्रुतमेववा ॥ तेनाग्नौकरणंकुर्यात्पिंडस्थानेतुनिर्वपेत् ॥ अन्नाख्यंभोजनांगंतुयत्कर्मविकिरंतथा ॥ गृहपाकात्समुद्धृत्यसक्तुभिः
ष्टभागिनांभागमामश्राद्धेविवर्जयेत् ॥ स्मृत्यंतरे ॥ आमश्राद्धंयदाकुर्यात्पिंडदानंकथंभवेत् ॥ तदभावेहिरण्येनअदैवंपार्वणेनतु ॥
पायसेनवा ॥ अथहिरण्यश्राद्धं ॥ अन्नाभावेद्विजःकुर्याच्छ्राद्धमामेनवैयतः ॥ अथविधिः ॥ संकल्पंसू-
॥ अन्नाद्द्विगुणमामंस्याद्धिरण्यंचचतुर्गुणं ॥ तदभावात्ततस्तस्यपर्याप्तंवापिकारयेत् ॥ आवाहनार्घ्यदिकिरप्रदक्षिणापितृस्तुतिः ॥
क्तपठणंद्विजाश्चनियमास्तथा ॥ भाजनासादनंचैवह्यग्नौकरणमेवच ॥ एककालेगतासूनांबहूनामथवा-
॥ विसर्जनाच्छादनेचहेमश्राद्धेविवर्जयेत् ॥ अथैकस्मिन्दिवसेश्राद्धानि ॥ संबंधासक्तिमा
द्वयोः ॥ तंत्रेणश्रपणंकुर्याच्छ्राद्धंचैवपृथक्पृथक् ॥ भवेद्यदिसपिंडानांयुगपन्मरणंतथा ॥ कुर्यात्पश्चात्तृतीयायसन्निपातेष्वयंक्रमः ॥
लोक्यव्युत्क्रमाच्छ्राद्धमाचरेत् ॥ कृत्वापूर्वमृतस्यादौद्वितीयस्यततःपुनः ॥ यदियःकुरुतेमोहाच्छ्राद्धं
॥ अशक्तविषयेउक्तमेतत् ॥ ननुशक्तविषये ॥ श्राद्धद्वयंनकुर्वीतपाकेनैकेनकश्चन

तस्यवृथाभवेत् ॥ शक्तौमसांपृथक्कुर्यात्पृथक्पाकेनवैक्रमात् ॥ निर्वृसैकंपुनःकुर्यादर्चयित्वाथवाभवेत् ॥ पित्रोःश्राद्धेतुसं प्राप्तेनचेत्पर्युपितेपिवा ॥ पितृपूर्वंसुतःकुर्यादन्यत्रासनियोगतः ॥ अथसहगमनं ॥ एकांचित्यांसमारूढौदंपतीनिधनंगतौ ॥ ॥ तयोःश्राद्धंपृथक्कुर्यादेकस्मिन्कालएवतु ॥ पृथक्पाकेनवैश्राद्धंपित्रोरपिपृथक्पृथक् ॥ वैश्वदेवादिकंसर्वंपृथगेवविधीयि- ते ॥ वैश्वदेवादिकमितिविश्वेदेवार्घ्याग्नौकरणपिंडविकिरादिकमित्यर्थः ॥ स्मृसंतरे ॥ निमंत्र्यादौपितुःश्राद्धेदेवेपित्र्ये चवैद्विजान् ॥ निमंत्रयेत्ततोमातुःश्राद्धेविप्रान्यथाक्रमं ॥ प्रक्षाल्यपैतृकेपादौद्विजानामथमातृके ॥ उपक्रमेदर्चनांतमेवं स्यान्मातृकेपिच ॥ अथैकस्मिन्दिनेश्राद्धद्वयंनिषिद्धं॥सुधार्णवे ॥श्राद्धंकृत्वातुतस्यैवपुनःश्राद्धंनतद्दिने ॥ नैमित्तिकंतुकर्तव्यंनिमि त्तानुक्रमोदयं ॥ श्राद्धंकृत्वापुनःश्राद्धंनकुर्यादेकवासरे ॥ यदिनैमित्तिकंनस्यादेकोद्दिष्टंभवेद्यदि ॥ द्वबहूनिनिमित्ता निजायेरन्नेकवासरे ॥ नैमित्तिकानिकार्याणिनिमित्तोत्पत्त्यनुक्रमात् ॥ श्राद्धंस्यादेकदैवत्यमेकमुद्दिश्यवैयदि ॥ श्राद्धद्व- यंनकर्तव्यमेकस्मिन्नेववासरे ॥ कालादर्शे ॥ नित्यदार्शिकयोश्चोदकुंभमासिकयोरपि ॥ दार्शिकस्ययुगादेश्चदार्शिकाल भ्ययोगयोः ॥ दार्शिकस्यचमन्वादेःप्राप्तेश्राद्धकर्मणि ॥ प्रसंगादितरस्यापिसिद्धेरुत्तरमाचरेत् ॥ नित्यश्राद्धदार्शिक युगमन्वाद्यलभ्ययोगेषुषट्पुरुषात्मकमेकदैवत्यंभवति ॥ उदकुंभमासिकयोःप्रत्याब्दिकेत्रिपुरुषात्मकमेकदैवत्यंतस्मादे तादृशंश्राद्धद्वयंत्रयंवानकर्तव्यमित्यर्थः ॥ देवताभेदेसतिश्राद्धत्रयंवाकर्तव्यमेव ॥ तत्रसएवाह ॥ नित्यस्यचोदकुंभस्यानि- त्यमासिकयोरपि ॥ दर्शस्यचोदकुंभस्यदर्शमासिकयोरपि ॥ नित्यस्यचाब्दिकस्यापिदर्शस्याब्दिकयोरपि ॥ युगमन्वाब्दि

कयोश्चमन्वाद्याब्दिकयोरपि ॥ प्रत्याब्दिकस्यचालभ्ययोगस्यावाहितस्यच ॥ सपातेदेवताभेदाच्छ्राद्धयुग्मंसमाचरेत् ॥
॥ दर्शेप्रत्याब्दिकेप्राप्तेश्राद्धंस्यात्तत्रवैकथं ॥ आदौप्रत्याब्दिकंश्राद्धंकुर्याद्दर्शंततःपरंश्राद्धेसपिंडेसंप्राप्तेपिंडहीनेतुवैयदि ॥
श्राद्धंकृत्वासपिंडंतुपिंडहीनमथाचरेत् ॥ सपिंडंपिंडसहितंश्राद्धमित्यर्थः ॥ प्रत्याब्दिकेयदाश्राद्धंयुगमन्वंतरादिकं ॥ प्रा-
प्तेचेतच्चकुर्वीतनैवदर्शेयुगादिकं ॥ श्राद्धेनैवकृतेनेहबहुदैवत्यकेनच ॥ सिद्धिस्यादल्पदैवस्यश्राद्धस्यचाविनाब्दिकं ॥ अथ
श्राद्धमहिमा ॥ श्राद्धकालेषुसर्वेषुश्राद्धंकुर्वीतमानवः ॥ आयुःप्रजायशःकीर्तिःप्रजाश्रीश्चविवर्धते ॥ श्रद्धयाक्रियतेश्राद्ध
मन्नेनाच्छादनेनच ॥ दक्षिणावायथाशक्तिश्राद्धंचैवप्रशस्यते ॥ आकाशेतारकासंख्यातृणसंख्यामहीतले ॥ श्राद्धकाले
तुदानस्यपुण्यंवक्तुंनशक्यते ॥ सौवर्णंवायथारौप्यंतदभावेथताम्रजं ॥ तत्कालएवदत्तंचेत्तृप्यास्युःपितरोध्रुवं ॥ अज्ञा
नाद्वाप्रमादाद्वानास्तिकादथवायादि ॥ निराशाःपितरस्तस्यतत्कालेचेन्नदीयते ॥ अथामश्राद्धं ॥ दक्षिणाद्विगुणादेयायथाचा-
र्यायदीयते ॥ पितृयज्ञेपिदातव्यापितुस्ज्ञानविशेषतः ॥ यच्चसंकल्पितंद्रव्यंयदितस्मैनदीयते ॥ सयातिनरकंघोरंयावदाभूत-
संप्लवं ॥ सूतके ॥ श्राद्धेहनिक्षणेदत्तेसुसंकल्प्ययथाविधिः ॥ पादप्रक्षालनादूर्ध्वंविप्राणांनास्तिसूतकं ॥ यदिस्यात्सू
तकंश्राद्धेपादप्रक्षालनादधः ॥ श्राद्धकर्मनकर्तव्यमित्येवंकौशिकोब्रवीत् ॥ ऋष्यशृंगः ॥ आब्दिकेचैवसंप्राप्तेह्याशौचंजा
यतेयदि ॥ आशौचेतुव्यतिक्रांतेतत्रश्राद्धंविधीयते ॥ व्याघ्रः ॥ पित्रोःप्रत्याब्दिकेप्राप्तेसूतकंयादिजायते ॥ निवृत्ते
सूतकेश्राद्धंकुर्यादेकादशेहानि ॥ तत्रापिकरणासंभवेदर्शेवाकुर्यात् ॥ दैवात्प्रत्याब्दिकश्राद्धेत्वंतरामृतसूतके ॥ आशौचा

नंतरंकुर्यात्तन्मासेंदुक्षयेपिवा ॥ तदहश्चेत्प्रदुष्येतकेनाचित्सूतकादिना ॥ सूतकानंतरंकुर्यात्पुनस्तदहरेववा ॥ मृताहेनैंभवेच्छ्राद्धंदैवात्प्रत्याब्दिकंयदि ॥ एकादश्यांचकृष्णायांकुर्याद्दर्शेतदान्हिवा ॥ गोभिलः ॥ प्रत्यब्देतुव्यतिक्रांतेप्रमादात्कार्यमेवतत् ॥ दर्शाष्टम्यांचकृष्णायामेकादश्यांतदान्हिवा ॥ अथयदिमृताहमासोनज्ञायतेतद्विषये ॥ हेमाद्रौ ॥ ॥ नज्ञायतेमृताहश्चेत्प्रोषितेसंस्थितेसति ॥ मासश्चेत्प्रतिविज्ञातस्तद्दर्शेस्यादथाब्दिकं ॥ श्राद्धाविघ्नसमुत्पन्नेप्यविज्ञातेमृतेहानि ॥ एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः ॥ यदामासोनविज्ञातोविज्ञातंदिनमेवतु ॥ तदाचाषाढकेमासेमासेवातद्दिनंभवेत् ॥ दिनमासानाविज्ञातौमरणस्ययदापुनः ॥ प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशा ॥ अथब्राह्मणाभावे ॥ पात्राभावेपरंकृत्वापितृयज्ञविधिंनरः ॥ निर्दिश्याप्यन्नमुद्धृत्ययत्रपात्रंततोनयेत् ॥ सर्वाभावेक्षिपेद्गौगवेदद्यात्तदप्सुच ॥ नतुप्राप्तस्यलोपोस्तिपैतृकस्याविशेषतः ॥ अथद्रव्याभावे ॥ अग्निनावादहेत्कक्षंश्राद्धकालेसमागते ॥ तस्मिन्नुपवसेदन्हिजपेद्वाश्राद्धसंहितां ॥ सर्वाभावेवनंगत्वाकक्षामूलप्रदर्शकः ॥ सूर्यादिलोकपालानामिदमुच्चैःपठिष्यति ॥ नमेस्तिवित्तंनधनंनचान्यच्छ्राद्धोपयोगिस्वपितृन्नतोस्मि ॥ तृप्यंतुभक्त्यापितरोममेतौभुजौकृतौवर्त्मनिमारुतस्य ॥ ॥ अथश्राद्धकालः ॥ याज्ञवल्क्यः ॥ अमावास्यष्टकावृद्धिःकृष्णपक्षोयनद्वयं ॥ द्रव्यंब्राह्मणसंपत्तिर्विषुवःसूर्यसंक्रमः ॥ ॥ व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः ॥ श्राद्धंप्रतिरुचिश्चैवश्राद्धकालाःप्रकीर्तिताः ॥ अथषण्णवत्यः ॥ अमायुगमनुक्रांतिधृतिपातमहालयाः ॥ अन्वष्टकाश्चतिथयःषण्णवत्यःप्रकीर्तिताः ॥ षण्णवत्यइतिश्राद्धविशेषः ॥ अथश्राद्धदैवता-

नि ॥ त्रिदैवसंमृताहेथपट्‌दैवसंतुदार्शिके ॥ वृद्धौतुनवदैवसमष्टकासुतथैवच ॥ दर्शेनित्येयुगादौचमन्वादौग्रहणेतथा ॥
॥ संक्रांतिषुभरण्यांचपट्‌दैवसंविधीयते ॥ शातातपः ॥ नांदीमुखेष्टकाश्राद्धेगयायांचमृतेहनि ॥ मातुःश्राद्धंसुतःकुर्या
दन्यत्रपतिनासह ॥ विश्वादर्शे ॥ मातुर्गयाष्टकावृद्धिमृताहेषुमहालये ॥ श्राद्धंकुर्यात्पृथक्दैवंतत्रत्वानुगतावापि ॥ अत्र
कश्चिद्विशेषः ॥ प्रयोगसारे ॥ अष्टकासुचवृद्धौचगयायांचमृतेहनि ॥ चंद्रसूर्योपरागेतुव्यतीपातेमहालये ॥ मातुःश्रा
द्धंपृथक्कुर्यादन्यत्रपतिनासह ॥ पितरोयत्रपूज्यंतेतत्रमातामहाअपि ॥ वृद्धौतुनवदैवसंपट्‌दैवसंतुदार्शिके ॥ महालयेग
याश्राद्धेज्ञेयंद्वादशदैवतं ॥ प्रयोगसारे ॥ आषाढ्याःपंचमेपक्षेश्राद्धंकुर्याद्दिनेदिने ॥ उद्दिश्यनवदैवसमित्येवंमनुरब्रवीत् ॥
॥ अथैकस्मिन्दिनेकुर्यात्सर्वानुद्दिश्ययत्नतः ॥ महालयात्मकंश्राद्धंतद्वयासदृशंभवेत् ॥ अथपिंडरहितश्राद्धानि ॥ हेमा
द्रौ ॥ संक्रांतौग्रहणेपातेयुगमन्वंतरादिषु ॥ भरण्यांवापिकुर्वीतश्राद्धंपिंडैर्विनैवतु ॥ संग्रहे ॥ मन्वादौचयुगादौचग्रह-
णेचंद्रसूर्ययोः ॥ संक्रांतिषुचसर्वासुश्राद्धंपिंडंविनाभवेत् ॥ पिंडहीनंतुयच्छ्राद्धंसंकल्पाख्यंप्रचक्षते ॥ तच्चापिहिद्विजःकु-
र्यादित्येवंमुनयोब्रुवन् ॥ आवाहनार्घ्यपिंडांश्चविकिरोच्छिष्टपिंडकौ ॥ स्वधोक्तिमग्नौकरणंसंकल्पेसप्तवर्जयेत् ॥ अथश्रा-
द्धेनियमः ॥ दंतधावनतांबूलक्षौराभ्यंगमभोजनं ॥ रत्यौषधिपरान्नंचश्राद्धकर्ताविवर्जयेत् ॥ अत्रकश्चिद्विशेषः ॥ आम
श्राद्धेतथानित्येकाम्यश्राद्धेमहालये ॥ निषिद्धंनैवतांबूलमितिशातातपोब्रवीत् ॥ दर्शेचापरपक्षेचक्रांतौमनुयुगादिषु ॥
॥ श्राद्धंकृत्वाततोभुक्त्वातांबूलंखादयेद्द्विजः ॥ यस्तुपितृष्वतृप्तेषुतांबूलंयदिखादयेत् ॥ भवेत्पुत्रःसपापिष्ठोनिराशाःपितरो

गताः ॥ श्राद्धकालेषुसर्वेषुश्राद्धकर्तातुयाद्विजः ॥ नकुर्यात्क्षारमभ्यंगंतथैवस्त्रीनिषेवणं ॥ अथापरपक्षः ॥ पारिजाते ॥ कन्यागतेसवितरियान्यहानितुषोडश ॥ क्रतुभिस्तानितुल्यानितेषुदत्तमथाक्षयं ॥ अहःषोडशकंयत्तुशुक्लप्रतिपदासह ॥ चंद्रक्षयाविशेषेणसापिदर्शात्मिकास्मृता ॥ आदौमध्येवसानेचयत्रकन्यांव्रजेद्रविः ॥ सपक्षःसकलःपूज्यःश्राद्धषोडशकंप्रति ॥ नभस्यापरपक्षेतुश्राद्धंकुर्याद्दिनेदिने ॥ नैवनंदादिवर्ज्यंस्यान्नैववर्ज्याचतुर्दशी ॥ नभस्यापरपक्षेतुमृताहानिपितुर्यदि ॥ करोतितत्रयःश्राद्धंपितॄणामक्षयंभवेत् ॥ भरणीप्रेतपक्षस्यमहतीपरिकीर्तिता ॥ अस्यांश्राद्धंकृतंयेनसगयाश्राद्धकृत्भवेत् ॥ नंदाभृग्वर्कभौमेषुचतुर्दश्यांत्रिजन्मसु ॥ एषुश्राद्धंनकुर्वीतगृहीपुत्रधनक्षयात् ॥ नित्यनैमित्तिककाम्येश्राद्धंयस्तुमघादिषु ॥ दद्यात्तज्ज्येष्ठपुत्रस्यनाशस्यादितिनिश्चितं ॥ प्राजापत्येचपौष्णेचमघायांभार्गवेतथाः ॥ यस्तुश्राद्धंप्रकुर्वीततस्यपुत्रोविनश्यति ॥ मघायांचत्रयोदश्यांकन्यासंस्थेदिवाकरे ॥ पिंडदानंपरित्यज्यश्रात्धंतत्रविधीयते ॥ याज्ञवल्क्यः ॥ प्रतिपत्प्रभृतिष्वेकांवर्जयित्वाचतुर्दशीं ॥ शस्त्रेणतुहतायेतुतेभ्यस्तत्रप्रदीयते ॥ समत्वमागतस्यापिपितुःशस्त्रहतस्यच ॥ एकोदिष्टंसुतःकुर्याच्चतुर्दश्यांमहालये ॥ चतुर्दश्यांतुयच्छ्राद्धंसपिंडीकरणेकृते ॥ एकोद्दिष्टविधानेनतत्कुर्याच्छस्त्रघातिनां ॥ सपिंडीकरणादूर्ध्वंमृतस्यावित्तुदादिभिः ॥ कुर्याद्भूतेप्रेतपक्षेत्वेकोद्दिष्टंसुतःपितुः ॥ निषिद्धानिपरित्यज्यतिथिवारादिकानिच ॥ अथैकस्मिन्दिनेकुर्याच्छुभेत्वापिमहालयं ॥ पारिजाते ॥ अमावास्यांभरण्यांचद्वादश्यांपक्षमध्यके ॥ यथातिथिंचनक्षत्रंवारंचनविचारयेत् ॥ अपुत्रोनग्निकश्चैवविधवाब्रह्मचारिणः ॥ दर्शेमहालयंकुर्युर्नकुर्यात्पुत्रवान्गृही ॥ अन्नाभावेद्विजा

भावेतीर्थेचैवमहालये ॥ एकंवाप्याशयेद्विप्रमध्ये।न्पिंडान्पृथक्पृथक् ॥ अथसन्यासिश्राद्धं ॥ स्मृत्यर्थसारे ॥ नकुर्या
त्पार्वणादन्यत्ब्रह्मीभूतायभिक्षवे ॥ त्रिदंडग्रहणादेवप्रेतत्वंनैवजायते ॥ एकादशाहेसंप्राप्तेपुत्रःकुर्वीतसत्क्रियां ॥ दंडग्र
हणमात्रेणनैवप्रेतोभवेद्यतिः ॥ अतःपुत्रेणकर्तव्यंपार्वणंतस्य..र्वदा ॥ एकोद्दिष्टंनकुर्वीतयतीनांचैवसर्वदा ॥ अहन्येकाद-
शेतेषांपार्वणंतुविधीयते ॥ सपिंडीकरणात्तेषांनकर्तव्यंसुतादिभिः ॥ प्रतिमासेतुकर्तव्यंमृताहेमासिकादिकं ॥ सन्यासि
नोप्याब्दिकादिपुत्रःकुर्याद्यथाविधिः ॥ महालयेतुयच्छ्राद्धंद्वादश्यांपार्वणेनतु ॥ ब्रह्मनिष्ठेचसन्यस्तेपितर्युपरतेश्रुते ॥ सपिं
डीकरणंनैवनाशौचंनोदकीक्रया ॥ अहन्येकादशेप्राप्तेपार्वणंतुविधीयते ॥ सपिंडीकरणंनैवकर्तव्यतुसुतादिभिः ॥ सद्यः
सन्यसनादेवप्रेतत्वंन्नैवजायते ॥ एकोद्दिष्टंनकर्तव्यंसन्यस्तानांकदाचन ॥ पार्वणंतुसदातेषामेषधर्मःसनातनः ॥ तत्रशौन
कः ॥ ब्रह्मीभूतेचसन्यस्तेतातेचनिधनंगते ॥ नतस्यसूतकंकार्यंसपिंडैस्तुसुतादृते ॥ ब्रह्मीभूतस्यतस्मात्तुकर्तव्यंनावशिष्य-
ते ॥ दशाहेतुव्यतिक्रांतेपुत्रःकुर्यात्तुपार्वणं ॥ प्रत्यब्दंपार्वणंकुर्यादेषधर्मःसनातनः ॥ द्वादशाहमनुध्यायन्कुर्याच्छिष्यःस
माहितः ॥ असंस्कृतंविशीर्णंचयत्रदेशेकलेवरं ॥ धर्मलोपोभवेत्तत्रदुर्भिक्षंमरणादिकं ॥ उशनाः ॥ यतौमृतेचसंपन्नेनां
शौचंनोदकाक्रिया ॥ नदुःखंनैवशोकश्चज्ञातीनांगोत्रिणामपि ॥ वृषोत्सर्गोनदाहश्चविपन्नेस्याद्गुरौमृतौ ॥ सुतेनवपनंकार्य
मितिबौधायनेस्मृतं ॥ अश्वत्थस्थापनंकार्यंयतीनांमस्तकोपरि ॥ अश्वत्थस्थापितोयेनस्छापितोपिमहेश्वरः ॥ दर्शनात्स्प
र्शनात्तस्यसर्वंनश्यतिपातकं ॥ कुटीचकंतुप्रदहेत्बहूदकंजलेक्षिपेत् ॥ हंसंचैवतुनिक्षिप्यपरहंसंविकीरयेदितिव्यासवचनं ॥

श्राद्धांतएव ॥ तथाचस्मृतिः ॥ पित्र्यर्थंनिर्वपेत्पाकंवैश्वदेवार्थमेवच ॥ वैश्वदेवन्नपित्र्यर्थंनदर्शेवैश्वदेविकं ॥ सत्यव्रतः ॥ ॥ अग्नौकरणहोमंतुहुत्वाहुनेद्दशाहुतीः ॥ पृथक्पाकेनवैदर्शेविधिरेपउदाहृतः ॥ अग्नौकरणासंभवेविशेषमाह ॥ दर्शेविसर्जनादर्वागुत्तराचमनात्परं ॥ वैश्वदेवंततःकुर्यात्केचिदेवंवदंतिहि ॥ अनाहिताग्नियोदर्शेश्राद्धंकृत्वाविधानतः ॥ पितृशेपेणवैकुर्याद्वैश्वदेवंततोद्विजः ॥ अथाहिताग्निविषयं ॥ पक्षांतकर्मनिर्वर्त्यवैश्वदेवंतुसाग्निकः ॥ पिंडदानंततःकुर्याततोन्वाहार्यतेबुधः ॥ प्रत्यद्बेमासिकेचैवश्राद्धंकृत्वाविधानतः ॥ तच्छेषेणैवकुर्वीतवैश्वदेवंद्विजोत्तमः ॥ चशब्दादष्टकादिष्वपिज्ञेयं ॥ मांडव्यः ॥ यद्येकस्मिन्नहन्येवश्राद्धानिस्युर्बहूनिचेत् ॥ कृत्वाश्राद्धानिसर्वाणिवैश्वदेवंचरेदपि ॥ अथदौहित्रप्रतिपच्छ्राद्धं ॥ सत्यव्रतः ॥ मातामहोविपद्येतयदिचेत्पुत्रवानपि ॥ कुर्यान्मातामहश्राद्धंसपिंडंपार्वणेनाहि ॥ व्याघ्रः ॥ ॥ कुर्यान्मातामहश्राद्धंप्रतिपद्याश्विनेसिते ॥ सपितापिसपिंडंतुजीवत्यपिचमातुले ॥ दौहित्राख्यंचयच्छ्राद्धंकचिद्देशेप्रचक्षते ॥ सर्वत्रनायमाचारोवदंतिमुनयोहितत् ॥ पुत्राभावेपत्न्यभावेपिबहुकर्तृविषयं ॥ आचार्यः ॥ पुत्रत्वेवहवोयस्यकर्तारोभातृजादयः ॥ यदिस्युःकेनकर्तव्याह्यपुत्रस्यचवैक्रिया ॥ एकएवतुकुर्वीतप्रत्यद्बंप्रेतकर्मच ॥ भ्रातृजोज्येष्ठएवापिसत्सुवैबहुकर्तृपु ॥ गर्गः ॥ ज्येष्ठश्चेत्संनिधौनस्यादनुजोवापिसत्क्रियां ॥ यःस्यात्प्रियतमोयस्यसोपिवाबहुकर्तृपु ॥ व्याघ्रः ॥ ॥ पुत्रत्वेभावितोयस्तुप्रियकारीचपालितः ॥ सएवकुर्यात्प्रसद्धंअपुत्रस्यचवौक्रियां ॥ इतिश्रीनारायणभट्टविरचितायांधर्मप्रवृत्तौनानाविधश्राद्धप्रकरणं ॥ अथाशौचविधिरभिधीयते ॥ जातकंमृतकंचैवद्विविधंसूतकंस्मृतं ॥ स्रावःपातःप्रसूति-

श्चत्रिविधंजातकस्यतु ॥ मासत्रयेचतुर्थेचगर्भस्यस्रावइष्यते ॥ पातःस्यात्पंचमेषष्ठेप्रसूतिःसप्तमादिषु ॥ माससंख्यादिनं
मातुःस्रावेसूतकमिष्यते ॥ स्नानेनैवविशुध्यंतिसपिंडाश्चापिवैपिता ॥ पातेमातुर्यथामासस्तावदेवदिनंभवेत् ॥ सूतकंतुसपिं
डानांपितुश्चत्रिदिनंभवेत् ॥ प्रसूतौचैवसर्वेषांदशाहंसूतकंभवेत् ॥ क्षत्रियस्यद्वादशाहंविट्शूद्रौपक्षमासके ॥ त्रिदिनंयत्र
विप्राणांक्षत्राणांस्याच्चतुर्दिनं ॥ विशांपंचादिनंतत्रशूद्राणांचदिनाष्टकं ॥ नालच्छेदनतःपूर्वंजीवंजातोमृतोयदि ॥ मातुः
पूर्णमथान्येषांपितुश्चात्रिदिनंसमं ॥ मृतस्यप्रसवेचैवंनालच्छेदनतःपरं ॥ मातुःपितुश्चसर्वेषांज्ञातीनांपूर्णसूतकं ॥ पूर्णमितिद
शाहमित्यर्थः ॥ चतुर्थेदशरात्रंस्याषण्निशाःपुंसिपंचमे ॥ षष्ठेचतुरहाच्छुद्धिःसप्तमेषुदिनत्रयं ॥ आद्यंसपिंडेषुदशाहमुक्तंस
होदकानांसुदिनत्रयंस्यात् ॥ सगोत्रजानांदिनमाप्लुतिर्वानलेपभाजंदुहितुश्चशावं ॥ मृतकंमृतकेनैवसूतकंसूतकेनच ॥
शावेनशुध्यतेसूतिःशावंसूत्यानशुध्यति ॥ सूतिरितिसूतकंशावमितिमृतकंचेत्यर्थः ॥ नतुल्यमधिकंजाताच्छावमल्पंभवेद्यदि ॥
शुध्यतेजातकेनैवतुल्येधिक्यंस्वकालतः ॥ जातसूतकान्नतुल्यन्नाधिकंतस्माज्जातकाच्छावं ॥ अल्पंयदिभवेज्जाताःसूतकेनै
वशावंशुध्यतितुल्यंवाअधिकंवाशावंचेत्स्वकालेनैवशुध्यतीत्यर्थः ॥ तुल्यंकल्पेनशुद्धिस्यादल्पंचैवाधिकेनतु ॥ शुद्धिरल्पेनाधि
कस्यनभवेत्तुकदाचन ॥ दशाहेस्तमयादर्वाक्द्वितीयंसूतकंभवेत् ॥ पूर्वेणसुतकेनैवद्वितीयंतुविशुध्यति ॥ रात्रौचेत्प्रथमेयामे
द्वितीयंसूतकंभवेत् ॥ उर्ध्वंदिनद्वयंप्रोक्तमर्धरात्रादधोपिच ॥ अर्धरात्रादधोपिचेत्सूतकंतत्रापिदिनद्वयमेवेत्यर्थः ॥ तृतीयेप्र
हरेवापियदिस्यात्सूतकंपुनः ॥ तदात्रिरात्रमाशौचंसर्वेषामेवनिश्चितं ॥ सुतकायायदाशौचंतथाचैवाग्निदस्यतु ॥ मृतस्य

॥ अथश्राद्धेब्राह्मणनियमाः ॥ कारिका ॥ शुचीनिमंत्र्यद्वौदैवेत्रीन्विप्रान्पितृकर्मणि ॥ दैवेपित्र्येथवैकैकंसपिंडीकरणंविना ॥ बृहत्पराशरः ॥ प्राङ्मुखौदैविकौविप्रौपित्र्येत्रयउदङ्मुखाः ॥ एकैकोवोभयत्रस्यादसंपत्तावितिक्रमः ॥ संपत्तावर्घ्यपात्राणामेकैकस्यत्रयस्त्रयः ॥ पित्रादेर्ब्राह्मणाःभोक्ताचत्वारोवैश्वदेविके ॥ वृत्तिकारः ॥ सत्क्रियांदेशकालौचद्रव्यंब्राह्मणसंपदः ॥ पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरं ॥ द्वौदैवौप्राक्त्रयःपित्र्येउदगेकैकमेववा ॥ मातामहानामप्येवंतंत्रंवावैश्वदेविकं ॥ याज्ञवल्क्यः ॥ यद्येकंभोजयेच्छ्राद्धेदैवंतत्रकथंभवेत् ॥ अन्नंपात्रेसमुधृत्यसर्वस्यप्रकृतस्यच ॥ देवतायतनंकृत्वाततःश्राद्धंसमाचरेत् ॥ प्रास्येदन्नंतदग्नौतुदद्याद्वाब्रह्मचारिणे ॥ प्रयोगसारे ॥ आमंत्रणागतंविप्रंनिवारयतिदुर्मतिः ॥ ब्रह्महत्यामवाप्नोतिशूद्रयोनिषुजायते ॥ आमंत्रितस्तुयोविप्रोभोक्तुमन्यत्रगच्छति ॥ नरकाणांशतंगत्वाचांडालेष्वभिजायते ॥ श्राद्धकर्तापरश्राद्धंदर्शेचेद्यस्तुभुंजति ॥ नरकंप्रतिपद्येतकर्ताभोक्तातथैवच ॥ भ्रातरौपितृपुत्रौचतथाश्रोत्रियमेवच ॥ द्विजमप्यनधीतारंश्राद्धयज्ञेविवर्जयेत् ॥ भ्रातरौपितृपुत्रौतुनैकवर्गेनिमंत्रयेत् ॥ पृथक्वर्गेथवादैवेचैतानपिनियोजयेत् ॥ ब्राह्मणान्वेदसंपन्नान्पितॄन्भ्रातॄन्सुतानपि ॥ पृथक्वर्गेनयुंजीतनविप्रान्वेदनिर्वाजितान् ॥ एकैकमपिविप्रंतुवर्गेवर्गेनियोजयेत् ॥ दैवेपित्र्येथवान्यस्मिन्नविप्रंवेदवर्जितम् ॥ अथश्राद्धदेशः ॥ दक्षिणेप्रवणेदेशेतीर्थादौस्वगृहेपिवा ॥ भूसंस्कारादिसंयुक्तेश्राद्धंकुर्यात्प्रयत्नतः ॥ परकीयप्रदेशेतुपितॄणांनिर्वपेत्तुयः ॥ तद्भूमिस्वामिपितृभिःश्राद्धकर्मविहन्यते ॥ अटवीपर्वताःपुण्यानदीतीर्थानियानिच ॥ देवखाताश्चगर्ताश्चस्वामीतेपुनविद्यते ॥ पुनःश्राद्धविधिः ॥ प्रमादादकृतंचेत्स्यादग्नौकरणमेवच

अकृतंपिंडदानंहिपुनःश्राद्धंसमाचरेत् ॥ पितृपात्रंचलेत्स्थानात्पिताचेद्वमतेयदि ॥ स्पृशेत्पिंडांश्चमार्जारःपिंडोभिन्नःपितुर्यदि ॥ अग्नौकृतौतुनाशोग्नेःश्राद्धमध्येभवेद्यदि ॥ उपोष्यतद्दिनंकर्तापुनःश्राद्धंपरेहनि ॥ आपिंडदानपर्यंतन्नकिंचिदपिवैभवेत् ॥ प्रमादाचेद्भवेत्तत्रपुनःश्राद्धंसमाचरेत् ॥ अत्रविशेषवचनं ॥ श्राद्धेवमनेसति ॥ अकृतेपिंडदानेचापिताचेद्वमतेयदि ॥ कृत्वापाकंपुनःकुर्यात्श्राद्धंतत्रविधानतः ॥ मार्जारमूषकस्पर्शेपिंडेभिन्नेपितुर्यदि ॥ पुनःपिंडाःप्रदातव्यास्तेनपाकेनतत्क्षणात् ॥ पितामहादिदेवानांब्राह्मणोवमतेयदि ॥ सर्वमन्नंसमादायहुनेदग्नौतुलौकिके ॥ प्रणवेनाहुतिंचादावंतस्याद्भूर्भुवस्वरोम् ॥ आहुतीर्जुहुयात्त्रिंशन्मंत्रैःप्राणादिपंचकैः ॥ द्वात्रिंशदाहुतीरेवहुत्वापिंडान्प्रदापयेत् ॥ सर्वेषांशाखिनामेवंविधिरेषउदाहृतः ॥ सपिंडीकरणेचैवप्रेतश्चेद्वमतेयदि ॥ सपिंडीकरणंकुर्यात्पुनःपाकेनतत्क्षणं ॥ मासिकेचगयाश्राद्धेप्रत्यद्बेचमहालये ॥ पिताचेद्वमनंकुर्यात्पुनःश्राद्धंसमाचरेत् ॥ संक्रांतिपक्षपातेषुयुगमन्वष्टकासुच ॥ पिताचेद्वमतेदर्शेपुनःश्राद्धंनकारयेत् ॥ श्राद्धदिनेतिक्रांतेसातिश्राद्धलोपः ॥ श्राद्धानिस्वस्वकालेस्युःप्रमादादकृतानिचेत् ॥ अतीतानिनकार्याणिप्रत्यद्बंमासिकंविना ॥ सत्यव्रतः ॥ ऊनमासेपुनित्येषुतथानैमित्तिकेषुच ॥ उत्कर्षंचापकर्षंचनकुर्याद्दष्टकासुच ॥ अथजीवत्पितामहविषयं ॥ पितामहोस्थितोयस्यपितायदिविपद्यते ॥ द्वौपिंडावेकनामानावेकश्चप्रपितामहे ॥ सत्यव्रतः ॥ द्वौपिंडौपितृनाम्नैवदद्याज्जीवत्पितामहः ॥ प्रपितामहस्यचैकैकंपितुःप्रत्याब्दिकेषुच ॥ अथश्राद्धदिनेवैश्वदेवविधिः ॥ संग्रहे ॥ वृद्धावादौक्षयेचांतेदर्शेमध्येतुकुर्वते ॥ ॥ महालयेचपिंडांतेवैश्वदेवंचतुर्विधं ॥ मध्यइतिदर्शे ॥ अग्नौकरणानंतरंपृथक्पाकेनवैश्वदेवंकर्तव्यं ॥ बलिहरणादिकं-

मृतस्यचसुतस्यापिपूर्णम.शौचामिष्यते॥यावत्सूतकमस्पृश्यामाताप्राक्स्नानतःपिता॥ सर्वेषांतुसपिंडानांअस्पृश्यत्वंनसूतकं॥याव दाशौचमस्पृश्यास्तावत्प्रेतस्यवैसुताः॥ सपिंडास्तावदस्पृश्यायावत्स्यादस्थिसंचयः॥ यत्रोपनयनात्पूर्वंपुत्रोयदिविपद्यते॥पित्रोस्त्रि दिनमाशौचंदशाहाज्जननात्परं ॥ मृतश्चानुपनीतश्चेद्दशाहानंतरंयदि ॥ ब्राह्मणंविष्णुमुद्दिश्यचतुर्थेहनिभोजयेत्॥ पुत्रइत्यत्रकन्या-याउपलक्षणं ॥ आदंतजन्मनःसद्यआचूडान्नैशिकीस्मृता ॥ त्रिरात्रमाव्रतादेशादितिभेदस्तुगोत्रिणां ॥ मरणंकन्यकाया श्चेयावद्वर्षत्रयंभवेत् ॥ सद्यःशुद्धिःसपिंडानांतदूर्ध्वमहरेवतु ॥ पुत्रिकाशौचमपिपित्रोःपुत्रवदेवत्रिरात्रमितिगम्यते ॥ ऊनद्वि वर्षकंप्रेतंनदहेन्निखनेद्भुवि ॥ पूर्णद्विवर्षकंप्रेतंदहेदित्याहकश्यपः ॥ एकाहमपिन्यूनंस्याद्विवर्षस्यतुवैयदि ॥ निक्षिपेद्भुवि तंप्रेतंनदाहोनोदकक्रिया ॥ असंस्कृतसपिंडानामित्यनुपनीतज्ञातीनामित्यर्थः ॥ पंचत्वंयदिचेद्गच्छेदसपिंडोह्यसंस्कृतः ॥ ॥ तत्रस्नानेनशुद्धिःस्यादितिप्राहुर्मनीषिणः ॥ वाग्दानानंतरंयत्रयदिकन्याप्रमीयते ॥ आशौचंत्रिदिनंतत्रपितृपक्षेश्चवैकु ले ॥ कन्याशौचंविवाहोर्ध्वंपितृगोत्रेनविद्यते ॥ पुरुषत्रयपर्यंतंविवाहात्पूर्वमेवाहि ॥ दत्तानारीपितुर्गेहेसूयेताथम्रियेतवा ॥ ॥ अबंधुवर्गस्त्वेकेनशुचिस्तज्जनकास्त्रिभिः ॥ जनकग्रहणंमातापितृष्वसोदराणामुपलक्षणार्थं ॥ पितृगेहादतोन्यत्रयदिक-न्याप्रमीयते ॥ तत्रस्यात्पक्षिणीपित्रोर्नचान्येषामघंभवेत् ॥ दशाहात्परतःकन्यामरणंशृणुतेपिता ॥ आशौचंतद्दिनंपित्रो र्नान्येषामितिनिर्णयः ॥ शावाशौचमतोन्येषांपित्रोःस्रावेनशुध्यति ॥ पित्रोःशावमतोन्येषांनैवाशौचेनशुध्याति ॥ दशा हाभ्यंतरेपित्रोर्मरणंश्रूयतेयदि ॥ अवशिष्टदिनैःशुद्धाःपुत्राश्चैवान्यगोत्रिणः ॥ दशाहान्मरणंपित्रोर्बहिश्चेच्छ्रूयतेयदि ॥ अव

णादिदशाहांतंपुत्राणांतद्भवेदघं ॥ ऊर्ध्वंचेज्ज्ञातिमरणंदशाहाच्छ्रूयतेयदि ॥ सवासाजलमाप्लुत्यस्यादाशौचंयथोचितं ॥
मासत्रयेत्रिरात्रंस्यात्षण्मासात्पक्षिणीभवेत् ॥ अहस्तुनवमादर्वागूर्ध्वंस्नानेनशुध्यति ॥ श्रुतंबहिर्दशाहाच्चेदपत्यमरणंयदि ॥
तथाजन्मचपुत्रस्यसद्यःस्नानेनशुध्यति ॥ एकंदेशमिदंप्रोक्तमाशौचंपूर्वसूरिभिः ॥ देशांतरंभवेद्यत्रस्नानमात्रेणशुध्यति ॥
॥ देशांतरलक्षणं ॥ महानद्यंतरंयत्रगिरिर्वाव्यवधायकः ॥ वाचोयत्रविभिद्यंतेतद्देशांतरमुच्यते ॥ देशांतरंवदंत्यन्येषष्टियो
जनमायतं ॥ प्रत्यहंयोजनद्वयंगच्छन्यत्रमृतस्तस्यवार्तामाशौचकालमध्येप्रापयितुंनशक्नोतितद्देशांतरं ॥ तथाचविप्रस्यदशाहा
शौचिनःविंशतियोजनैर्देशांतरं ॥ क्षत्रियस्यद्वादशाहाशौचिनःचतुर्विंशतियोजनैरित्यादि ॥ तथा ॥ एकाहपक्षिणीत्रिरात्रा
शौचेषुद्विचतुःषड्योजनरूपदेशांतरंयोज्यं ॥ पुत्रविषयेतु ॥ त्रिंशद्योजनदूरंवाप्रत्येकंदेशभेदतः ॥ प्रोक्तंमुनिभिराशौचं
सपिंडानामिदंभवेत् ॥ पुत्रः ॥ पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्रकः ॥ श्रुत्वातद्दिनमारभ्यपुत्राणांदशरात्रकं ॥
॥ पत्न्याअपितथाशौचंभवेदेवंविनिश्चितं ॥ पत्न्याशौचंभवेत्भर्तुरप्येवंमुनिरब्रवीत् ॥ दूरस्थानिधनंभर्तुर्दशाहाच्छृणुतेय-
दि ॥ भार्याकुर्याद्घंपूर्णंपत्न्याअपिपतिस्तथा ॥ मातापित्रोर्यथाशौचंदशाहंश्रूयतेसुतैः ॥ अनेकेब्देपिदंपत्योस्तथैवस्या
त्परस्परं ॥ पितुर्दशाहमध्येचेन्मातायदिमृतातदा ॥ दहेन्मंत्राग्निनाप्रेतंनकुर्यादुत्तराक्रियां ॥ पैतृकादूर्ध्वमेवास्यान्मात्राशौ-
चंतुपक्षिणी ॥ विधायोदकदानादिकुर्यान्मातृक्रियांततः ॥ पैतृकात्सपिंडीकरणादूर्ध्वमित्यर्थ ॥ मातुर्दशाहमध्येतुमृतःस्या
द्यदिवैपिता ॥ पितुर्मरणमारभ्यदशाहंशावकंभवेत् ॥ एकमेवपितुश्राद्धंकुर्यादेकादशेहनि ॥ ततोवैमातृकंश्राद्धंकुर्यादाद्या

दिषोडशं ॥ अवशिष्टंदशाहांतंकृत्वाकर्मविधानतः ॥ मातृकंसकलंचैवसापिंडीकरणंभवेत् ॥ ततःकुर्यात्पितुःपुत्रःषोडशंच सपिंडनं ॥ तयोःस्यादेककालेवासापिंड्यमितिकेचन ॥ देशांतरेकृतेपित्रोःपुत्रेणप्रेतकर्मणि ॥ एकस्मिन्नेवकालेचेन्मरणंश्रूयतेतयोः ॥ दूरगोप्याचरेत्पुत्रोह्याशौचमुभयोःसमं ॥ कुर्यादेकादशाहेतुतयोःश्राद्धंपृथक्पृथक् ॥ पितुर्दशाहमध्येचेन्मरणंश्रूयतेयदि ॥ कृतक्रियायामातुश्चपित्राशौचेनशुध्यति ॥ असंस्कृतायामातुश्चमरणंश्रूयतेयदि ॥ पितुर्दशदिनादूर्ध्वंमातृकंपाक्षिणीभवेत् ॥ कृत्वाप्रेतक्रियामादौमातुरेवाथवैपितुः ॥ कृतक्रियायामातुश्चश्राद्धंस्यात्पितृपूर्वकं ॥ मातुर्दशाहमध्येतुपितुश्चेत्कृतकर्मणः ॥ मरणंश्रूयतेतत्रमातुःकर्मकथंभवेत् ॥ पितुःश्रवणमारभ्यदशाहंसूतकंभवेत् ॥ आशौचानंतरंकुर्यान्मातृकंसकलंसुतः ॥ अवशिष्टंचयत्किंचित्प्रेतकर्माथवैपितुः ॥ कुर्यादाह्निकवच्छ्राद्धमन्यथाकृतकर्मणः ॥ पैतृकंसकलंप्रेतकर्मकृत्वाथमातृकं ॥ आशौचंपक्षिणीमातुःकुर्यात्प्रेतक्रियादिकं ॥ देशांतरगतेचिरायितेविचारः ॥ दूरदेशंगतेवार्ताजीवतःश्रूयतेनचेत् ॥ यदिपूर्ववयस्कस्ययावद्वत्सराविंशतिः ॥ तथामध्यवयस्कस्यह्यब्दापंचदशैवतु ॥ तथापरवयस्कस्ययावद्द्वादशवत्सरं ॥ अतऊर्ध्वंप्रेतकर्मकार्यंतस्यविधानतः ॥ कृत्वाषडब्दंत्र्यब्दंवाप्रायश्चित्तंस्वशक्तितः ॥ प्रेतकार्येकृतेतस्ययदिचेत्पुनरागमः ॥ घृतकुंभेनसंस्नाप्यसर्वौषधिभिरप्यथ ॥ संस्कारान्सकलान्कृत्वामौंजीबंधनमाचरेत् ॥ ॥ पूर्वपत्न्यासहैवास्याविवाहःकार्यएवहि ॥ अथद्वादशाब्दादूर्ध्वमवलोकननिषेधः ॥ दंपतीपितृपुत्रौचस्वसारौभ्रातरौतथा ॥ पितृव्यमातुळौचैवदौहित्रोभागिनेयकौ ॥ पुत्रिकापितरौचैवभगिनीभ्रातरौतथा ॥ द्वादशाब्देव्यतीतेतुदूरदेशंगतेयदि ॥

॥ एतेषामेकमेकोपिनान्योन्यमवलोकयेत् ॥ इच्छंतिकेचिदाचार्याअन्योन्यमवलोकनं ॥ शिवालयेथवातीर्थेस्नात्वात्र
ज्वाल्यदीपकौ ॥ शिवंसंपूज्यविधिवदुभौतौदेवमध्यतः ॥ धृत्वाकांश्यमयंपात्रंसजलंरत्नपूरितं ॥ शांतिदैर्मंत्रघोषैश्चद्विजो
त्कैरवलोकयेत् ॥ आननंचैकमेकस्यदृष्ट्वासम्यक्शिवंनमेत् ॥ ब्राह्मणेभ्योयथाशक्त्यादद्यात्पात्रंसदक्षिणं ॥ अन्येभ्यश्चा
थविप्रेभ्योयथावित्तानुसारतः ॥ तेभ्योपिदक्षिणांदत्वापूजयेच्चशिवंपुनः ॥ नत्वादेवंद्विजान्सूर्यानागत्यस्वस्यमंदिरं ॥ ततो
व्याहृतिभिर्होमंशतमष्टोत्तरंतिलैः ॥ भुक्त्वाथभोजयेद्विप्रान्यथावित्तानुसारतः ॥ बांधवैःसहभुंजीतसर्वारिष्टप्रशांतये ॥ इ-
त्थंयःकुरुतेविप्रस्तस्यारिष्टंनविद्यते ॥ आयुष्कामीनरश्चैवअकृत्वानावलोकयेत् ॥ पूर्वावलोकितानांतुविधिरेषउदाहृतः ॥
॥ अथानुगमनविधिः ॥ प्राणंत्यजतियानारीभर्त्तारमनुवैमृतं ॥ तस्याएवतथाकुर्यात्पितृवत्प्रेतसत्क्रियां ॥ अग्निश्चरु
स्तथाहोमोत्युपस्थानंतथैवच ॥ एकएवभवेत्कर्तादंपत्योरनुयायिनोः ॥ नवश्राद्धंसपिंडंचषोडशादिकमेवच ॥
॥ तयोःश्राद्धंसुतःकुर्याद्युगपच्चपृथक्पृथक् ॥ अथसापत्नमातृविषयं ॥ सापत्नमातृमरणंदशाहाच्चेद्बहिःश्रुतं ॥
॥ प्रथमेद्व्यतीतेवात्रिदिनंचाथपक्षिणी ॥ यावत्प्रथमाब्दस्तावत्त्रिरात्रमाशौचंतदूर्ध्वंपक्षिणीपुत्रवत्साः ॥ सा-
पत्नमातुर्विषयएवतत् ॥ अपिशब्दादतीतेब्देपित्रिरात्रमुक्तंतदपुत्रवत्साएव ॥ तथाच ॥ पितृपत्न्यामपेतायाम
पुत्रायांतुवैयादि ॥ संवत्सरेव्यतीतेपित्रिरात्रमशुचिर्भवेत् ॥ पुत्रस्योपनयादूर्ध्वंमरणंश्रूयतेयादि ॥ दशाहात्परतोयावदब्दं
स्यात्त्रिदिनंतथा ॥ पुनर्दाहः ॥ दशाहात्परतोयस्यपुनर्दाहोभवेद्यदि ॥ अनेकेब्देपिसर्वेषांत्रिदिनंसूतकंभवेत् ॥ के

चिद्विशेषमाहुः ॥ गृहीतेपूर्वमाशौचेपितुश्चासंस्कृतस्यतु ॥ दाहादिपुनराशौचंदशाहमितिकथ्यते ॥ पुत्राणामिदमाशौ
चमन्येषांत्रिदिनंभवेत् ॥ प्राग्राहिणांतुनैवंस्यात्कर्तुर्वैत्रिदिनंभवेत् ॥ यस्मिन्ग्रामेशवस्तिष्ठेज्ज्ञातिभ्योयस्यकस्यचित् ॥
ग्रामस्यतावदाशौचंनीत्वाशुद्धिस्तुतत्क्षणात् ॥ असपिंडाशौचं ॥ पुत्रीगेहेथवान्यत्रप्रमृतौपितरौयदि ॥ दशाहाभ्यंतरेषु
श्याह्निरात्रंशावसूतकं ॥ पित्रोर्दशादिनादूर्ध्वंमरणंदत्तकन्यका ॥ श्रूयेतयदिचेत्तस्याःपक्षिण्याशौचमिष्यते ॥ स्वसुर्गृहे
मृतोभ्राताभ्रातुर्वाथगृहेस्वसा ॥ आशौचंत्रिदिनंतत्रपक्षिण्येवापरत्रतु ॥ भगिनीसूतकंचैवभ्रातुश्चैवाथसूतकं ॥ नैवस्या
तुभ्रातृपत्न्यास्तथाचभगिनीपतेः ॥ मरणंश्रूयतेभ्रातुर्दशाहात्परतोयदि ॥ दिनमेकंस्वसुःप्रोक्तंस्नानंस्याद्भगिनीपतेः ॥
॥ दशाहात्परतोभ्रातामरणंश्रूयतेस्वसुः ॥ तस्यैकंदिनमाशौचंतत्पत्न्याःस्नानमुच्यते ॥ भगिन्यश्चात्मनःपित्रोर्मातामहश्चत
त्सुतः ॥ म्रीयंतेदत्तकन्यायाःस्नानंतेषांतथोच्यते ॥ अस्यार्थः ॥ आत्मनोभगिन्यःमातापित्रोर्भगिन्यः ॥ मातामहश्चकारा
न्मातामहीतत्सुतःमातुलसुतःएतेम्रीयंतेचेद्दत्तकन्यायाविवाहितायाःस्नानमात्रमेव ॥ दत्तकन्यामरणेतेषामितिभागिनेयमाताम
हमातामहीमातुळानामपिस्नानमात्रमेवेत्यभिप्रायः ॥ पितृष्वसुःपतिर्मातृष्वसुर्भर्त्तामृतोयदि ॥ दशाहाभ्यंतरेस्नानाच्छुद्धिरूपंनाकिं
चन ॥ मातामहोमातुळश्चम्रीयतेवाथतत्स्त्रियः ॥ दौहित्रोभागिनेयश्चपितुर्मातुश्चवैस्वसा ॥ स्वगृहेत्र्यहमाशौचंपरत्रस्यात्तुपाक्षिणी ॥
श्रुतंबहिर्दशाहाच्चेत्स्नानेनैवविशुध्यति ॥ स्वगृहइत्याशौचिनोगृहंनमृतस्य ॥ जामाताश्वशुरःश्वश्रूर्म्रीयतेस्वगृहेयदि ॥
॥ आशौचंत्रिदिनंतत्रपरवेश्मनिपाक्षिणी ॥ मातुरैक्याद्द्विपितृकौभ्रातरावन्यगोत्रजौ ॥ एकाहंसूतकेतत्रात्रिरात्रंमृतके

तयोः ॥ याज्ञवल्क्यः ॥ अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुचेति ॥ एकाहमाह ॥ तदसान्निधौज्ञेयंयदापितुरेकाहस्तदा-
सपिंडानांस्नानं ॥ अन्याश्रितेषुदारेषुपरपत्नीसुतेषुच ॥ गोत्रिणःस्नानशुद्धाःस्युस्त्रिरात्रेणैवतत्पिता ॥ श्रोत्रियाचार्यशि
ष्यर्त्विक्उपाध्यायश्चवैगुरुः ॥ मित्रश्चैवसहाध्यायीमृतश्चेत्स्वगृहेत्र्यहं ॥ स्वगृहात्परगृहमपिगृह्यते ॥ परगृहेपाक्षिणीत्युक्त-
त्वात् ॥ मरणंत्वसपिंडानांदशाहाच्चेत्बाहिःश्रुतं ॥ सद्यःस्नानेनशुद्धिःस्यादितिप्राहुर्मनीषिणः ॥ असापिंडाइति ज्ञा
तयोनभवंतिइत्यर्थः ॥ तस्यैवयस्ययत्प्रोक्तमाशौचंचान्यगोत्रिणां ॥ भवेन्नैवाथतत्पत्न्याइत्येवंमुनयोविदुः ॥ अथपक्षिण्या
दिलक्षणं ॥ द्विदिवारात्रिमेकाचेत्पक्षिणीत्यभिधीयते ॥ अहोरात्रमितिप्रोक्तंनैशिकीत्यभिधीयते ॥ आसायमहरेवस्यात्स
द्यस्तात्कालमुच्यते ॥ एवंविचार्यनिर्णीतमाशौचंतुमनीषिभिः ॥ अथातुरस्नानविधिः ॥ आतुरस्नानउत्पन्नेदशवारमना
तुरः ॥ स्नात्वास्नात्वास्पृशेदेनमातुरःशुद्धिमाप्नुयात् ॥ ज्वराभिभूतायानारीरजसाचपरिप्लुता ॥ कथंतस्याभवेच्छौचं
शुद्धिःस्यात्केनकर्मणा ॥ चतुर्थेहनिसंप्राप्तेस्पृशेदन्यातुतांस्त्रियं ॥ सासचैलावगाह्यापःस्पृशेत्स्नात्वापुनःपुनः ॥ दशद्वाद
शवाकृत्वाह्याचमेच्चपुनःपुनः ॥ अंतेचवाससंत्यागस्ततःशुद्धाभवेत्तुसा ॥ अथरजस्वलामरणविधिः ॥ पंचभिःस्नापयित्वा
तुगव्यैःप्रेतांरजस्वलां ॥ वस्त्रांतरकृतांकृत्वातांदहेद्विधिपूर्वकं ॥ सूतिकायांमृतायांतुकथंकुर्वीतयाज्ञिकः ॥ कुंभेसलिल
मादायपंचगव्यंतथैवच ॥ पुण्यर्ग्भिरभिमंत्र्यापोवाचाशुद्धिंलभेत्ततः ॥ तेनापिस्नापयित्वातुदाहंकुर्याद्यथाविधि ॥ अन्यो
पिपक्षः ॥ दशाहाभ्यंतरेचैवम्रीयतेचेत्प्रसूतिका ॥ कथंतस्याभवेच्छुद्धिर्दाहकर्मकथंभवेत् ॥ शूर्पेणस्नापयेद्विप्रोदशवारंततो

जलैः ॥ पंचपल्लवसंयुक्तैःपंचगव्यैःकुशोदकैः ॥ कारयित्वाततःस्नानमभिषिंचेत्कुशोदकैः ॥ दाहयित्वाविधानेनमंत्रवत्पै
त्रमेधिकं ॥ अथगर्भिणीमरणविधिः ॥ प्रवक्ष्यामिक्रमेणैवशौनकोहंद्विजन्मनां ॥ गर्भिण्यांतुमृतायांवैकथंकुर्वंतिमानवाः ॥
॥ गर्भिण्यामरणेप्राप्तेषण्मासाभ्यंतरेयदि ॥ सहैवदहनंकुर्याद्गर्भछेदंनकारयेत् ॥ प्रेतांश्मशानंनीत्वाथभर्तावापुत्रएववा ॥
॥ छेदयेदूर्ध्वषण्मासाद्गर्भिण्यामरणंयदि ॥ नाभेरधोवामभागेगर्भछेदोविधीयते ॥ शनैस्तुछेदयेद्भर्तापुत्रोवाप्यन्यएववा ॥
॥ सगर्भिण्यांमृतायांतुसंस्कुर्यादुदकेनतां ॥ आपोहिष्ठात्रिभिर्मंत्रैःप्रोक्ष्यगर्भसमाहितां ॥ नीत्वाश्मशानंषण्मासादूर्ध्वंभर्ता
विदारयेत् ॥ शिशुमादायजीवंतंदापयेत्स्तनमन्यया ॥ यस्तेस्तनयइत्यनयाव्याहृत्यागृहमानयेत् ॥ उदरंचाव्रणंकृत्वापृष
दाज्येनपूरयेत् ॥ मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः ॥ स्नापयित्वाविधायान्यद्वस्त्रांतंचाथतांदहेत् ॥ मृतेपत्यौद-
शाहेस्त्रीसूयतेवारजस्वला ॥ भूत्वाशुद्धायथाकालेस्नात्वासूत्रंविमोचयेत् ॥ सूत्रंमंगलसूत्रमित्यर्थः ॥ अथमहानद्यः ॥
॥ गोदावरीभीमरथीकृष्णावेणीसरस्वती ॥ तुंगभद्रासुप्रयोगाकावेरीसप्तनामका ॥ दुग्धोदानलिनीरेवासीतलाकस्त्व-
नामकः ॥ एताअपिमहानद्यःसत्यमूलाद्रिनिर्मिताः ॥ अथपुण्यपर्वताः ॥ श्रीशैलोहिमहान्मेरुर्मैनाकोमलयस्तथा ॥
॥ ऋषभःकूटकोलश्चमहेंद्रोद्रोणसंज्ञकः ॥ चित्रकूटस्त्रिकूटश्चहेमकूटस्तथैवच ॥ गोवर्धनश्चगोकर्णोनीलश्चककुभस्तथा ॥
॥ सह्योविंध्यश्चमंदारोविख्याताःपर्वताअमी ॥ ततश्चैवतथाप्रोक्तायेचान्येगिरिसंज्ञकाः ॥ महानद्यंतरंयत्रगिरिर्वाव्यव-
धायकः ॥ इत्युक्तत्वान्महानद्यःपर्वताश्चोक्ताः ॥ अथदुर्मरणानि ॥ विद्युत्तोयाग्निचांडालोसर्पपाशाद्विजाअपि ॥ वृक्ष-

व्याघ्रपशुभ्यश्चमरणंपापकर्मिणां ॥ आत्मानंघातयेद्यस्तुविषशस्त्राग्निनायदि ॥ स्वेच्छयामृत्युमाप्नोतिसयातिनरकंध्रुवं ॥
क्षिपेदस्थीनिगंगायांशरीरंचाप्यसंस्कृतं ॥ नदीष्वन्यासुवातीर्थेदुर्मृतस्यनरस्यच ॥ वर्षादूर्ध्वंभवेत्तस्यप्रायश्चित्तंविधानतः ॥
नारायणबलिंकृत्वापालाशविधिनाचरेत् ॥ प्रेतकर्मततःकुर्याद्दाहादिसकलंहितत् ॥ षोडशादिसपिंडंचतदातस्योपतिष्ठति ॥
देशकालभयाद्वापिसद्यःकर्तुमुपक्रमेत् ॥ प्रायश्चित्तंहिद्विगुणंविधायाथौर्ध्वदेहिकं ॥ मृतस्यानिश्चयात्सद्यःकर्तव्याप्रेतसत्क्रिया ॥
प्रायश्चित्तविधिंकृत्वानैवेच्छयामृतस्यतु ॥ शस्त्रादिनाहतेसप्तदिनादर्वाङ्मृतोयदि ॥ भवेदुर्मरणंप्राहुरित्येवंपूर्वसूरिभिः ॥
अस्नात्वाचाप्यहुत्वाचह्यदत्वान्नंतथाद्विजः ॥ एवंविधस्याविप्रस्यसर्वदासूतकंभवेत् ॥ व्याधितस्यकदर्यस्यऋणग्रस्तस्यसर्वदा ॥
क्रियाहीनस्यमूर्खस्यस्त्रीजितस्यविशेषतः ॥ व्यसनासक्तवित्तस्यपराधीनस्यनित्यशः ॥ श्राद्धत्यागविहीनस्यभस्मांतंसूतकंभवेत् ॥
स्वाध्यायजपहोमादिनाशौचीवर्जयेत्सदा ॥ संध्यांतुमनसाकुर्यादर्घ्यमात्रंसमंत्रकं ॥ ऋत्विजांदीक्षितानांचयाज्ञियंकर्मकुर्वतां ॥
नैवाशौचंभवेत्तेषांपितुश्चमरणंविना ॥ जननेमरणेचैवनाशौचंब्रह्मचारिणां ॥ पित्रोर्मरणएवस्यादाशौचंब्रह्मचारिणां ॥
॥ अथास्थिशुद्धिः ॥ अस्थिशुद्धिंप्रवक्ष्यामिपंचामृतकुशोदकैः ॥ मृद्भस्मगोमयेनैवसंलिप्यप्रोक्षयेज्जलैः ॥ दश-
वारंनिमज्याप्सुप्रतिप्रणवसंयुतः ॥ पंचगव्यैश्चसंशोध्यनद्यांतीर्थोदकेपिवा ॥ केशवाद्यैश्चसंप्रोक्ष्यचतुर्विंशतिनामभिः ॥
हेममौक्तिकरत्नाद्यैःसंयुक्तानिचकारयेत् ॥ वेष्टयेत्ताम्रपात्रेणह्यथवामृगचर्मणा ॥ सुसंस्कृतानामेवास्थ्नामस्पृशत्वंनविद्यते ॥
असंस्कृतानिचास्थीनिनस्पृशेत्ब्राह्मणःक्वचित् ॥ अथनिक्षेपः ॥ यावदस्थिमनुष्याणांगंगातोयेचतिष्ठति ॥ याव-

द्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ दशाहाभ्यंतरेवापिगंगायांस्थापितंयदि ॥ अर्द्धोदकेमृतेयावत्तावत्पुण्यमवाप्नुयात् ॥ वत्सरात्प्रथमादर्वाक्तीर्थेचास्थीनिनिक्षिपेत् ॥ विनागंगामथास्थीनिद्वितीयेब्देननिक्षिपेत् ॥ स्नानंकृत्वाततस्थाप्यकेशवाद्यैश्च नामभिः ॥ प्रक्षाल्यपंचगव्यैश्चपुष्पैश्चसमुपार्जयेत् ॥ धेनुंदत्वाथविप्रायलब्ध्वाज्ञांसुसमाहितः ॥ उद्धरेत्पितृनामानिसुसंकल्प्ययथावि धि ॥ अघमर्षणपूर्वेणधर्मायेतिनमोस्तुते ॥ विसर्जयेज्जलेस्थीनिनमोनारायणायच ॥ अथगुर्वादिलक्षणं ॥ नि-षेकादीनिकर्माणियःकरोतियथाविधि ॥ संभावयतिचान्येनसविप्रोगुरुरुच्यते ॥ कुलवृत्धात्समायातावंशेयस्यपरंपरा ॥ पुरोहितःसविज्ञेयःसर्वसंस्कारकर्मसु ॥ उपनीयतुयःशिष्यंवेदमध्यापयेद्द्विजः ॥ संकल्पंसहरस्यंचतमाचार्यंप्रचक्षते ॥ अग्न्याधेयंपाकयज्ञमग्निष्टोमादिकान्मखान् ॥ यःकरोतिव्रतीयस्यतस्यऋत्विगिहोच्यते ॥ पितैवगुरुरित्येवततश्चैवपुरोहितः ॥ आचार्योवेददश्चापिगुरुत्वंस्याच्चतुर्ष्वपि ॥ इतिश्रीमन्नारायणभट्टविरचितायांधर्मप्रवृत्तौअशौचप्रकरणं ॥ अथश्राद्धविधिरभिधी यते तत्रकर्तुर्नियममाह ॥ दंतधावनतांबूलंनखकेशानिकृंतनं ॥कर्ताकुर्वीतपूर्वेद्युर्भोक्ताचैवपरेहनि ॥ दंतधावनतांबूलंक्षौराभ्यंगमभो जनं ॥ रसौषधिपरान्नंचश्राद्धकर्ताविवर्जयेत् ॥ पुनर्भोजनमध्वन्नंभारमध्वानसंगमं ॥ दानंप्रतिग्रहोहोमःश्राद्धभुक्त्वष्टवर्जयेत् ॥ ॥ शुचीनिमंत्र्यद्वौदैवेत्रीन्विप्रान्पितृकर्माणि ॥ दैव्येपित्र्येथवैकैकंसापिंडीकरणंविना ॥ सायमौपासनंहुत्वास्वयंभुक्तवतो द्विजान् ॥ उपगम्यस्वयंशिष्यःसुतोवाप्रश्रयान्वितः ॥ श्राद्धंश्वोभवितातत्रभवद्भिर्दिश्यतेक्षणः ॥ एवमामंत्र्यानियतोमनो वाकायकर्मभिः ॥ भोक्तुर्भोजयितुश्चैवब्रह्मचर्यमतःपरं ॥ श्राद्धाहेवाथकुर्वीतपूर्वेद्युर्येद्यसंभवे ॥ परेद्युरथवाप्रातःकुतपेवा-

निमंत्रयेत् ॥ दत्वादैवेक्षणंचादौपित्र्येचैवापसव्यतः ॥ स्नात्वामध्यान्हिकींसंध्यांकृत्वाहूयनिमंत्रितान् ॥ नतमित्यादि-
कान्मंत्रान्ब्राह्मणैःसहसंपठेत् ॥ प्रायश्चित्तनिमित्तंतुसूक्तंयच्चातिलोदकं ॥ कुर्याच्छ्राद्धेषुसर्वेषुतीर्थेनैवकदाचन ॥ ब्राह्मणैर्वि
त्रपूतैश्चहिरण्यंसकुशैर्जलैः ॥ सर्वमभ्युक्षयेद्वेश्मततःशुध्येदसंशयः ॥ ब्रह्मदंडार्थमादायहिरण्यंसकुशंतिलैः ॥ त्रिःप्रदक्षण
माःवृससमस्तेतिपटन्द्विजान् ॥ द्रव्यंनिवेद्यविप्राणांपुरतोयःस्वशक्तितः ॥ तेभ्यश्चैवलभेदाज्ञामनोवाक्कायकर्मभिः ॥ न-
त्वापितरमुद्दिश्यश्राद्धंचामुकसंज्ञकं ॥ कर्तुममाधिकारोस्तुभवंतोथब्रुवंत्विति ॥ कालश्चमुख्यकालोस्तुपाकादीनांपवित्रता ॥
॥ कृत्वानिमंत्रितांस्पृष्ट्वाप्रत्यूचुस्तेतथैवच ॥ द्विराचम्यततःकर्ताप्राणायाममथाचरेत् ॥ पूर्ववदेवसंकल्प्यप्राचीनावीत्यतः
परं ॥ नामगोत्रंसमुच्चार्यरूपंचश्राद्धकर्मणि॥ प्रेतकर्मणिगोत्रादिनामसंकीर्तयेद्विजः॥संबंधनामगोत्राणिरूपांश्चैवानुवादयेत्॥ एवंस
र्वत्रनामादिंतिलेस्यार्दजनेपिच॥संकल्पेचासनेपाद्येपिंडेचाच्छादनेक्षणे॥ अन्नेचावाहनेक्षय्येनामान्येषुसमुच्चरेत् ॥ पितृणांचैवदेवा
नामन्नेनहविषातथा॥ सद्यःश्राद्धविधानेनकरिष्येयुष्मदाज्ञया॥ दैवेक्षणंततोदद्यात्सव्येनैवतुदैविकं ॥ पितृणामपसव्येनसर्वस्या-
त्पैतृकंचयत् ॥ गोमयेनैवकुर्वीतप्रांगणेमंडलद्वयं ॥ श्राद्धकालेतुविप्राणांपादप्रक्षालनायच ॥ मंडलंचतुरस्रंस्याद्देवेप्रादेश
संमितं ॥ वितस्तिपैतृकेवृत्तंतयोर्मध्येषडंगुलं ॥ देवानामंडलंचैवप्रागग्रौद्वौकुशौयवान् ॥ गंधपुष्पेक्षिपेत्पित्र्येदक्षिणाग्रान्
कुशांस्तथा ॥ दद्यान्मंत्रंसमुच्चार्यदैवेथपितृकर्मणि॥ दत्वापाद्यंपठेन्मंत्रंशन्नोदेवीरभिष्टये ॥ पादमूलेपितुस्थानंपादमध्येपि
तामहः ॥ प्रपितामहःपादाग्रेपादौप्रक्षालयेत्क्रमात् ॥ शीर्षेस्वस्यजलंसिंचेत्तत्स्थानाद्विनिर्गतं ॥ दक्षिणांसंस्पृशेत्कर्तु

ब्राह्मणोमुखमीक्ष्यच ॥ कर्त्ताचम्यकुशान्भूमौविसृज्याथद्विराचमेत् ॥ विसृजेयुर्द्विजादर्भानाचम्यस्वस्वमंडले ॥ ईशान्यामाचमेत्कर्तामंडलाच्छ्राद्धकर्माणि ॥ देवाश्चैवततःपूर्वेपितृविप्रास्तथोत्तरे ॥ दैवेकर्मण्युदक्स्थानप्राङ्मुखानुपवेशयेत् ॥ ॥ प्राणानायम्यसंकल्प्यस्वयंचैवोपविश्यतु ॥ ततस्तिष्ठेत्करिष्येहंप्रक्रांतंश्राद्धकर्मच ॥ प्राचीनावीत्यपहताइतिमंत्रंसमुच्चरन् ॥ नैरृतींदिशमारभ्यसर्वादिक्षुक्षिपेत्तिलान् ॥ पितॄणांपुरतःप्रोक्ष्यमंत्रेणोदीरतामिति ॥ उदक्संस्थंतथादेवंगायत्र्याप्रोक्षयेदथ ॥ संस्मृत्यपुंडरीकाक्षंपाकादिप्रोक्ष्यवारिणा ॥ श्राद्धकालेगयांध्यात्वाप्राचीनावीत्युदङ्मुखः ॥ उपविष्टःपृथक्पाणीदेवानामपिसंमुखः ॥ आसनादियथाचारंकर्मकुर्यात्तथैवहि ॥ देवानांदक्षिणेदद्यात्कंबलादिकुशासनं ॥ पितॄणामासनंदद्याद्वामभागेयथोचितं ॥ अर्घ्यस्यामासनात्पूर्वंपश्चादावाहनंभवेत् ॥ यथाचारस्तथाकुर्याद्भाष्यकारोब्रवीदथ ॥ विश्वेदेवासइत्यस्यद्विरावृत्तिर्भवेदिह ॥ विश्वेदेवाश्रणुतेतिसकृन्मंत्रमुदीरयेत् ॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः ॥ येअत्रविहिताःश्राद्धेसावधानाभवंतुते ॥ सौवर्णेराजतेताम्रेतदभावेतुपर्णजे ॥ अर्घ्यार्थंद्वेप्रकुर्वीतदैवेपात्रेथपैतृके ॥ त्रीणिचैवार्घ्यपात्राणिपर्णाभ्यामुभयत्रतु ॥ दैवेपित्र्येथपर्णाभ्यामर्घ्यपात्राणिकारयेत् ॥ पर्णयोरेकतोमूलेकृत्वातूत्तानयोःक्रमात् ॥ प्रविशंतियथापात्रेसमूलान्यंगुलानिहि ॥ मानंस्यादर्घ्यपात्राणांदैवेपित्र्येचकर्मणि ॥ देवानामर्घ्यपात्रंस्याच्चतुरंगुलविस्तृतं ॥ उन्नतंचाथवैवृत्तंपैतृकेंगुलिपंचकं ॥ आदौप्रसार्यप्रागग्रौत्युदक्संस्थौकुशौचवै ॥ द्वौद्वौतुन्याग्बिलस्यातामर्घ्यपात्रेअधोपरि ॥ गायत्र्याप्रोक्ष्यचोत्तानेकुर्यात्पात्रेचपैतृके ॥ उपरिस्थावधःकार्यावधस्थौचतथोपरि ॥ शन्नोदेवीरितिमंत्रंस

कुदुच्चार्यपूरयेत् ॥ प्रतिपात्रयवोसीतिमंत्रांतेनिर्वपेद्यवान् ॥ गंधपुष्पकुशादीनिनिक्षिपेदर्घ्यपात्रयोः ॥ संपन्नेदेवपात्रेतुस्वाहार्घ्यौ
चेत्यथाब्रवीत् ॥ यादिव्याइतिमंत्रेणदद्यादर्घ्यपृथक्पृथक् ॥ गंधमाल्यांबरादीनिकांडानुसमयेथवा ॥ देवार्च्यादक्षिणादिस्या-
त्पादजान्वंसमूर्धसु ॥ शिरोंसजानुपादेषुवामांगादिषुपैतृके ॥ अर्चेतप्रार्चनयवैःपूजयेदक्षतैःक्रमात् ॥ गंधपुष्पेधूपदीपौवासांस्या
भरणानिच ॥ दद्याद्वासांसिमंत्रेणयुवासुवासाइत्यथ ॥ दत्वापितृभ्योवासांसिपश्चान्मंत्रंसमुच्चरेत् ॥ पूजनंविधिवत्कृत्वाततोनुज्ञांद्वि
जन्मनां ॥ गृहीत्वाह्यपसव्येनकरिष्येपितृपूजनं ॥ प्राचीनावीसपोदद्यात्पितृकर्माप्रदक्षिणं ॥ दर्भान्द्विगुणभुग्नांस्तुदत्वैषामासनेषु
तु ॥ आवाहयेत्पितॄंस्तेषुविप्रेषुविधिवत्क्रमात् ॥ उशंतस्त्वेतुमंत्रेणप्रतिपितरमुच्चरेत् ॥ आपोदत्वाथदर्भेषुह्यर्घ्यपात्राणिवैक्रमात् ॥
पूर्वदक्षिणकाग्राणिह्याग्नेयीप्रवणानितु ॥ आस्तीर्यपूर्ववद्दर्भानधश्चैवतथोपरी ॥ गायत्र्यातानिसंप्रोक्ष्यकृत्वोत्तानानिपूर्ववत् ॥
तैजसेश्ममयेपात्रेमृन्मयेंतर्हितेकुशैः ॥ एकद्रव्येषुवाग्नेयीदिक्संस्थेषुततःपरं ॥ उत्तानेष्वपरुव्येनतेषुवैनिर्वपेत्तिलान् ॥
पुरयेदुदकंतेषुपितृपात्रादिषुत्रिषु ॥ निषिच्यापोनुमंत्र्याघ्र्याशन्नोदेवीरभिष्टये ॥ अनुमंत्रःसकृत्कार्यास्तिलोसियःवपेत्तिलान् ॥
आवृत्तिःप्रतिपात्रंस्यान्मंत्रस्योहस्तुनेष्यते ॥ गंधपुष्पाक्षतंतेषुपात्रेषुप्रक्षिपेदथ ॥ स्वधार्घ्याइत्यपोर्घ्यास्ताउपवीतीनिवेदयेत् ॥ आ
न्याआपःप्रदातव्याविप्रपाणिष्वतःपरं ॥ अर्घ्यंसशेषमादायदक्षिणेनतुपाणिना ॥ सव्यहस्तगृहीतेननिनयेत्पितृतीर्थतः ॥ त्रि
भिःपितरिदंतेर्घ्यमितिपाणिष्वनुक्रमात् ॥ दत्वादत्वानिनीतास्तायादिव्यर्चानिमंत्र्यतु ॥ दत्वार्घ्यंपितृहस्तेषुपश्चान्मंत्रंसमु-
च्चरेत् ॥ यादिव्याइसनेनैवहस्तेहस्तंनिधापयेत् ॥ पितृपात्रेप्रसिच्यार्घ्यशेषंपात्रद्वयेस्थितं ॥ अनक्तिपुत्रकामस्तैर्मुखमेकी-

कृतैर्जलैः ॥ दत्वार्घ्यसंस्रवांस्तेषांपात्रेकृत्वाविधानतः ॥ पितृभ्यःस्थानमसीतिन्युब्जंपात्रंकरोत्यथ ॥ न्यग्बिलंपितृपात्रं स्यादासमाप्तेर्नचालयेत् ॥ नोत्धरेत्प्रथमंपात्रंपितृणामर्घ्यपातितं ॥ आवृतास्तत्रतिष्ठंतिपितरःशौनकोब्रवीत् ॥ उद्धृतंय-दितत्पात्रंविवृतंवायदाभवेत् ॥ अभोज्यंतद्भवेच्छ्राद्धंक्रुद्धैःपितृगणैर्गतैः ॥ प्राचीनावीत्यपोदत्वापितृपूर्वंतिलैःक्रमात् ॥ अ-र्चयेद्विरआरभ्यनमोवइतिमंत्रतः ॥ प्राचीनावीत्यथेदानींगंधमाल्यंसधूपकं ॥ दीपंवस्त्रंयथाशक्तिदेयंवार्यंतरांतरा ॥ कुर्वीत भोजनार्थंहिमंडलानियथाक्रमं ॥ दैविकेचतुरस्रंतुपैत्र्येवृत्तानुवैयतः ॥ क्षिपेद्देवेयवान्दर्भौपैतृकेसकुशांस्तिलान् ॥ मंडलेदै-विकेपात्रेसौवर्णेराजतेतथा ॥ तदभावेसुवर्णानांभाजनानिन्यसेदथ ॥ आग्नेयादिपरिस्तीर्यपितृपूर्वंतिलोदकैः ॥ कुशैस्ति लैर्भस्मनाचमध्येमध्येजलेनतु ॥ करशुद्धिंततःकुर्यात्तत्तोयंमंडलेक्षिपेत् ॥ दैव्येवायव्यमारभ्यपरिषिंचेज्जलेनच ॥ कु शैःपत्रैर्यवैश्चैवभस्मनाकरशोधनं ॥ पितृयज्ञचरोरर्धमुद्धृत्याभ्यज्यसर्पिषा ॥ अग्नौकरिष्यइत्येतान्स्पृष्ट्वोक्तिःक्रीयतामिति ॥ ॥ अग्नौकरिष्येकरवैकरवाणीतिवापितान् ॥ क्रियतांतैःकुरुष्वेतिकुर्वीत्युक्तेयथाक्रमं ॥ प्राचीनावीतिनैवस्यादनुज्ञाचाहु तिद्वयं ॥ सोमायेतितुमंत्राभ्यांगृह्याग्नौजुहुयात्धविः ॥ अग्नेरभावेगृह्यस्यजुहुयात्पितृपाणिषु ॥ अभ्यज्यपितृपात्रेषुहुतशे-षंचयद्घृतं ॥ कुशैराज्यंगृहीत्वातुमूर्धानंदिवइत्यृचा ॥ दैवपूर्वाणिसर्वाणिभाजनान्यभिघारयेत् ॥ आमास्वित्यादिकान्मं त्रान्सूक्तानिचजपन्स्वयं ॥ सव्येनैवततोन्नादिविधिनापरिवेषयेत् ॥ अन्नंचपायसंभक्ष्यंघृतंचव्यंजनादिकं ॥ सूपसंतेमदा तव्यंसर्वस्यादेवपूर्वकं ॥ कर्तुर्दक्षिणतोदैवेपायसादितुवेषयेत् ॥ तथाचवामतःस्वस्यपैतृकेपरिवेषयेत् ॥ पितृणांभाजनस्थे

षुप्राचिनावीतिनेत्यथ ॥ अन्नेषुपरविष्टेषुहुतशेषंददात्यथ ॥ देवपात्रास्थितंचान्नंगायत्र्याचाभिमंत्रयेत् ॥ उद्दिश्यचान्नंवि
श्वेभ्योदास्यमानमथापिवा ॥ दत्वाजपेत्ततोमंत्रयेदेवासोदिवीसथ ॥ पितृभ्योपितथादत्वायेचेहेतिजपेदथ ॥ तिष्ठन्कु-
र्यादुपस्थानंदेवताभ्यइतिक्रमात् ॥ नमोदिसादिभिर्मंत्रैःसव्येनैवद्विजस्तुतिः ॥ तिथिवारादिकंस्मृत्वागृहीत्वासतिलंजलं ॥
पितृन्देवान्समुद्दिश्यक्रियमाणेनवैमया ॥ श्रात्धेनैवसुतृप्तिःस्यात्पितृणांचैवमेवाहि ॥ ब्रह्मलोकनिवासेतुनिनयेत्सतिलंजलं ॥
॥ ब्राह्मणैःप्रोक्षयित्वान्नंगायत्रींसमुदीरयेत् ॥ परिषेचनमंत्रस्यकारयेद्देवपूर्वकं ॥ चित्रगुप्तबालंचवैनदद्याच्छ्रात्धभुग्द्विजः ॥
अन्नेनचाथवाज्येनदद्यात्सव्येनदैविके ॥ अथैवापोशनार्थंवैपित्रादिद्विजपाणिषु ॥ निनयेत्सुजलंचाथसव्येनैवतुदैविके ॥
तिष्ठन्नेवस्मरेत्पादान्नीशानादीनुदङ्मुखः ॥ तत्सदेवामृतंचास्तुजुषध्वंहियथासुखं ॥ उत्कामृतोपस्तरणमसिस्वाहापिबेदथ ॥ वाग्य
तोभोजनंकुर्युर्लब्धंयच्चयथारुचि ॥ भुंजानानान्श्रावयेद्विप्रान्त्राक्षोघ्नान्पितृलिंगकान् ॥ पुराणानिपवित्राणिऋचोगाथापितृ
स्तुतिः ॥ यावदुष्णंभवत्यन्नंयावद्भुंजीतवाग्यतः ॥ पितरस्तावदश्नंतियावन्नोक्ताहविर्गुणाः ॥ हविर्गुणानवक्तव्याःपितरोया
वदर्पिताः ॥ तृप्तैस्तुपितृभिःपश्चाद्वक्तव्यंशोभनंहविः ॥ भोजनस्यचपर्याप्तंकिंचिद्देयंततोधिकं ॥ यद्यद्भुक्तंततः
किंचिकिंचिदुच्छिष्टभागिनां ॥ इच्छातृप्तेषुविप्रेषुगायत्रींसमुदीरयेत् ॥ तृप्तास्थइतितान्पृष्ट्वादेवांश्चाथापितृनिति ॥ तृप्ते
पुश्रावयेत्तस्मामधुवाताऋतायते ॥ अक्षन्नितिचतान्विप्रान्संपन्नमितिपृच्छतः ॥ क्रियतामन्नशेषःकिंतेचेष्टैःसहभुज्यतां ॥
॥ तद्वास्वीकृत्यसर्वस्मात्किंचित्किंचित्कृतंभवेत् ॥ सार्ववर्णिकमन्नाद्यमानीयाप्लाव्यवारिणा ॥ समुत्सृजेद्भुक्तवतामग्रतः

प्रकिरेद्भुवि ॥ पुरतश्चतिलान्दर्भान्प्रोक्ष्यापःपितृभाजनात् ॥ येअग्निदग्धामंत्रेणभुव्यन्नंप्रकिरेदथ ॥ यद्यद्भुक्तंततः किंचित्किंचित्पिंडार्थमुद्धरेत् ॥ पितृयज्ञचरोरन्नमुद्धृतंप्रक्षिपेदथ ॥ यजमानकुळजाताइतिमंत्रंसमुच्चरन् ॥ भुक्तशेषं त्यजेद्भूमौब्राह्मणःस्वयमुद्धरेत् ॥ माषान्नंपायसंचान्नंभक्ष्यभोज्यादिकंचयत् ॥ यद्यद्भुक्तंद्विजैःश्राद्धेसर्वंपिंडार्थमुद्धरेत् ॥ माषाःसर्वत्रवैग्राह्यादैवेपित्र्येचकर्मणि ॥ प्रेतपिंडेनचग्राह्याइत्येवंकौशिकोब्रवीत् ॥ उत्तराचमनात्पूर्वंपिंडदानंभवेदिह ॥ पश्चाद्वापिवदन्त्यन्येकेचित्गृह्यविदोजनाः ॥ पिंडदानमनाचांतेष्वाचांतेष्वथवाभवेत् ॥ अंभोनिनयनाद्यंतापितृयज्ञंसमापयेत् ॥ संनिधौनैवगृह्याग्नेरथवोच्छिष्टसन्निधौ ॥ पिंडपुचभवेत्तत्रवृत्तिकारवचोयथा ॥ पात्राद्वाक्स्फ्येनलेखांलिखेदपहताइति ॥ अभ्युक्ष्यतामवस्तीर्यसकृदाच्छिन्नबर्हिषा ॥ लेखायांपिंडदेशेतुशुत्धंतामितितुत्रिभिः ॥ तत्रापिंडत्रयंदद्यात्पराचीनेनपाणिना ॥ पितरित्त्यथचैतत्तेक्षिपेद्येचेतिमंत्रतः ॥ पित्रेनामानजानीयात्तत्तेद्यादिवदेत्क्रमात् ॥ निपृतानत्रपितरइतितानानुमंत्र्यतु ॥ अप्रदक्षिणमावृत्त्यदुदक्प्राणान्नियम्यच ॥ अभ्यावृत्यानुमंत्र्यामीमदंतेत्यनुमंत्रतः ॥ चरुशेषमवघ्रायनिनयेत्पूर्ववज्जलं ॥ आघ्रायाथचरोःशेषमाचमेदुपवीतकः ॥ निनयेदपसव्येनशुत्धंतामित्यपोथवै ॥ अभ्यंक्ष्वांक्ष्वेतिनामादिमंत्राभ्यांतैलमंजनं ॥ दद्याद्दशामथैतद्वादितापिंडेष्वतःपरं ॥ दद्यात्पिंडेषुलोमानिप्रकोष्ठस्थानियानिच ॥ पंचाशद्वत्सरादूर्ध्वमर्वाक्भवतिवृत्तिकृत् ॥ वरुणःपितृपिंडेस्यात्प्रजापतिःपितामहे ॥ प्रपितामहपिंडेग्निरित्येताःपितृदेवताः ॥ दत्वापिंडत्रयंचेत्थंसव्येनैवतुपूजयेत् ॥ गंधपुष्पादिभिश्चैवपिंडाधिष्ठाधिदेवताः ॥ यत्किंचि

स्पच्यतेगेहेभक्ष्यभोज्यादिकंचयत् ॥ अनिवेद्यनभोक्तव्यंपिंडेभ्योनकदाचन ॥ नमोवइत्युपस्थायमनोन्वेतितृचेनवै ॥ पर
तनेतिमंत्रेणपिंडांस्तांश्चप्रवाहयेत् ॥ औपासनांतिकंगछेज्जपेदश्नेदामित्यृचं ॥ तिथिवारादिकान्स्मृत्वापितृपूर्ववदुच्चरेत् ॥
पितृणांब्रह्मलोकोस्तिइत्युक्तानिनयेज्जलं ॥ आचांतानांचशुध्यर्थंपाणिप्रक्षालयेदथ ॥ मध्येमध्येजलंचैवदद्याद्यवकुशाक्ष
तान् ॥ पुनर्देयंजलंदैवेपितृणामपसव्यतः ॥ जलंदद्यात्तिलान्दर्भानक्षतान्पूर्ववज्जलं ॥ पृष्ट्वाभुक्तवतोथास्मद्गोत्रमित्यभि
वादयेत् ॥ प्रत्यूचुस्तेततोविप्राःपितृप्रसादोस्त्वित्यथ ॥ पितृप्रसादतोलब्धान्स्वगृह्यस्वयमक्षतान् ॥ धारयेच्छिरसिस्वस्यस्वगो-
त्रस्याभिवृत्धये ॥ चालयित्वाचपात्राणिस्वस्तीत्यथसमुच्चरेत् ॥ दद्यादक्षय्यमुदकंदैव्येपित्र्येयथाक्रमं ॥ अन्नप्रकिरणंके-
चिदत्रैवेच्छंतिसूरयः ॥ पात्रस्थानेषुसर्वेषुयथाचारोभवेदिह ॥ अन्नप्रकिरणार्थंयत्तदानीयजलाप्लुतं ॥ आचांतानांसमी
पेषुत्वग्रतोविकिरेद्भुवि ॥ असोमपाश्चमंत्रेणदेवानांविकिरेद्भुवि ॥ उत्तानंप्रथमंपात्रंकृत्वायज्ञोपवीत्यथ ॥ दत्वाचदाक्षि-
णांशक्त्याविसृजेदोंस्वधोच्यतां ॥ अवशिष्टंतुयत्किंचिदर्घ्यपात्रास्थितंजलं ॥ पिंडानांपुरतःसिंचेदोंस्वधोच्यतामित्यथ ॥
॥ अनुज्ञयातुविप्राणांततःपिंडान्समुत्धरेत् ॥ शांतिरित्यादिभिर्मंत्रैःपिंडस्थानेजलंक्षिपेत् ॥ स्वस्तित्युच्चारयेत्कर्ताब्राह्म-
णैःशोभनंहविः ॥ ततोविसर्जयेच्छ्राद्धंवाजवाजवतेत्यृचा ॥ उत्तिष्ठतेतिवामांसस्पृष्टाविप्रस्यवैपितुः ॥ एहैवपितरोदेवैः
स्वस्थानंगंतुमुद्यताः ॥ आमावाजस्यप्रसवइतिमंत्रंसमुच्चरन् ॥ त्रिःप्रदक्षिणमावृत्यमंडलस्थान्द्विजानथ ॥ पवित्रग्रंथि
मुत्सृज्यमंडलेविसृजेज्जलं ॥ दक्षिणाभिमुखास्तिष्ठन्याचेतेमान्वरान्पितॄन् ॥ दातारोनोभिवर्धतांवेदाःसंततिरेवनः ॥ श्रद्धाच

नोमाव्यगमत्बहुधेयंचनोस्त्विति ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनःसंतुमाचयाचिष्मकिंचन ॥ याचितारंप्रतिब्रुयुस्तथैवास्त्वितितेद्विजाः ॥ स्वादुषंसदइत्येतौमंत्रौकर्तापठेदिह ॥ अक्षतान्प्रक्षिपेत्पादेष्विहैवस्ततंथेति-चं ॥ लभेदथाशिषस्तेभ्यःसंतुष्टेभ्योयथारुचि ॥ आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच ॥ प्रयच्छंतुतथाराज्यं पितानृणांपितामहाः ॥ घृतेनाभ्यज्यवैपादान्विप्राणांक्षालयेदथ ॥ मर्दयेद्भक्तिभावेनततश्चैवाभिवादयेत् ॥ अद्यमे-सफलंजन्मभवत्पादाब्जवंदनात् ॥ अद्यमेवंशजाःसर्वेयातावोनुग्रहाद्दिवं ॥ पत्रशाकादिदानेनक्लेशितायूयमीदृशाः ॥ त तत्क्लेशजातंचितस्थंविस्मृत्यक्षंतुमर्हथ ॥ वासिष्ठसदृशाविप्राःसूर्यपर्वसमातिथिः ॥ आसनादेर्नमस्कारोभवत्सत्कारएवतु ॥ यस्यस्मृत्याचनामोक्त्या०न्यूनंसंपूर्णतां०मंत्रहीनं०श्राद्धंसंपूर्णतांयातिप्रसादाद्भवतांमम ॥ जपेन्मंत्रंवासिष्ठासोदेवान्वासिष्ठइत्यथ ॥ इदंपितृभ्यइत्येतामुच्चैर्गाथांपठेदथ ॥ क्षमध्वंभोद्विजन्मानःपितृयज्ञेममाद्यवै ॥ कृत्वातौसंपुटौपाणिह्यासीमांतमनुव्रजये-त् ॥ म्रियतेचेत्पितायस्यविद्यमानेपितामहे ॥ पैतृकादिषुनामानिकथमेवोच्चरेदिति ॥ द्विवारंपितृनाम्नैवपैतृकादि-षुवायतः ॥ प्रपितामहनाम्नैवएकवारमितीहतु ॥ अनेनविधिनाश्राद्धंकुर्याज्जिवत्पितामहः ॥ दद्यात्पिंडद्वयंपित्रेतथै-कंप्रपितामहे ॥ इतिश्रीमन्नारायणविरचितायांधर्मप्रवृत्तौश्राद्धप्रकरणंसमाप्तं ॥ अथश्राद्धोपयोगिवचनानि ॥ प्रत्य-ब्दंविधिनापित्रोःश्राद्धंकृत्वाद्विजोत्तमः ॥ कुर्यात्पंचमहायज्ञान्नितियज्ञविदोविदुः ॥ पित्रोःप्रत्याब्दिकंश्राद्धंविधिवत्तत्स-माप्यच ॥ कार्याःपंचमहायज्ञाइत्याहशालकायनः ॥ दद्याद्विसर्जितान्पिंडान्गुरवेदक्षिणान्वितान् ॥ तदभावेप्यवा

न्यस्मैविप्रायैवाप्सुनिक्षिपेत् ॥ पिंडांस्तुगोजविप्रेभ्योदद्यादग्नौजलेपिवा ॥ प्रक्षिपेत्सत्सुविप्रेषुद्विजोच्छिष्टंनमार्जयेत् ॥ पा-
त्राणिचालयेच्छ्राद्धेस्वयंशिष्योथवासुतः ॥ नस्त्रीभिर्नचकौमारैर्नान्यैश्चैवकदाचन ॥ नदद्यात्गोजविप्रेभ्योजलेनैवतुनिक्षिपे-
त् ॥ विकिरंतुद्विजोच्छिष्टंभूमौखात्वातुनिक्षिपेत् ॥ संकल्पादौपादशौचेपिंडदानेविसर्जने ॥ अर्चनांतेचविकिरेस्मृतमा-
चमनीयकं ॥ संकल्पादौचेयदर्भास्स्याज्याविप्रांघ्रिशोधने ॥ अर्चनादौघृतायेचत्याज्याःश्राद्धविसर्जने ॥ विसर्गश्चूलकश्चै
वविकिरंपंक्तिवारणं ॥ करशुद्धिरपोशानंपितृपूर्वाणिषट्सदा ॥ स्वागतस्वस्तिवचनेगोत्रशेषेप्रदाक्षिणे ॥ अर्घ्येचदक्षिणादा
नेषट्सुसव्यंविधीयते ॥ आवाहनेचपिंडेचश्रात्द्धानुवादनेक्षणे ॥ अन्नाच्छादनपाद्येषुनामान्यक्षय्यउच्चरेत् ॥ अ-
क्षय्यासनयोःषष्ठीद्वितीयावाहनेतथा ॥ अन्नदानेचतुर्थीस्याच्छेषाःसंबुत्धयःस्मृताः ॥ अन्नदानेविशेषःस्यादादौसंबुद्धिरु-
च्यते ॥ प्रथमाचचतुर्थीचयथालिंगविभक्तितः ॥ घृतलेपंपादशौचंविष्टरेचोपवेशनं ॥ मंत्रस्योहस्तथाजुष्टंवर्जयेदा
श्वलायनः ॥ अन्नस्यहिचतुर्भागंपिंडानांपरिषेचनं ॥ बव्हृचोनैवकुर्वीतपिंडपात्रमऽधोमुखं ॥ दीयमानंच
यच्चान्नंगायत्र्याभ्युक्ष्यवारिणा ॥ दद्यच्छ्रात्धेनिधायान्यमन्नस्योपरिवैकुशान् ॥ परिविष्टंचयच्चान्नमंगुष्ठेनाद्विजस्यतु ॥
स्पर्शयेत्सलिलंतोयंश्राद्धेविप्रकरेर्पयेत् ॥ अन्नादिसकलंदेयंविनाज्यंदेवपूर्वकं ॥ उक्तोयंमुनिभिःश्राद्धेविधिर्वाजसनेयिनां ॥
प्रेतकार्येषुसर्वेषुसपिंडीकरणेतथा ॥ पाणावेवतुहोमःस्यादन्यत्राग्नौकरेपिवा ॥ क्रतुर्दक्षौसत्यवसूकामकालौधनुर्धरौ ॥
पुरूरवाद्रवाश्चेतिप्रत्यद्धेचैवपार्वणे ॥ अन्यथाकुरुतेयस्तुश्राद्धंतस्यवृथाभवेत् ॥ विभक्तिलिंगानूयोज्ञात्वाश्राद्धेसंकल्पमाच-

रेत् ॥ हव्यंदेवानगृण्हंतिकव्यंचापितरस्तथा॥भुङ्क्तेयःश्राद्धकृन्मर्त्योयदिपंक्तौद्विजन्मनां॥सयातिनरकंघोरंपितृभिःसहमज्जति॥
अज्ञानात्कुरुतेश्राद्धंयोभिश्रवणवर्जितं॥श्राद्धंहताभवेत्कर्तानिराशाःपितरोगताः ॥ ब्राह्मणेभ्योक्षतांलब्धानाशीर्वचनसंयुतान्॥
धारयेच्छिरसिस्वस्यश्राद्धेनप्रेतकर्मसु ॥ द्वाभ्यामेवसुपर्णाभ्यामर्घ्यपात्राणिपैतृके ॥ सपिंडीकरणेप्रेतकार्येष्वेकेनचैवहि ॥
श्राद्धेप्रत्याब्दिकेपूर्वंतर्पणंक्रियतेयादि ॥ पितरस्तेनतृप्यंतिततोन्नंनलभंतिते ॥ नित्यकर्मकथंश्राद्धेकारुण्यानांयदाब्दिकं ॥
आब्दिकात्तर्पणंपूर्वंकुर्याच्छ्राद्धमतःपरं ॥ धर्मज्ञैर्विधिरुक्तोयंमातृकेपैतृकेनवा ॥ उर्ध्वपुंड्रंत्रिपुंड्रंवाललाटेयस्यदृश्यते ॥
कर्तुश्चैवाथभोक्तुश्चनिराशाःपितरोगताः ॥ तुलसीबिल्वपत्रंचरक्तपुष्पाणिकेतकी ॥जातीदर्शनमात्रेणनि० ॥ रंगवल्याकृतां
रेखांकंठेमालाद्विजस्यतु ॥ ललाटेतिलकंदृष्ट्वानि० ॥ घंटानादंविवादंचहुंकारंहास्यरोदनं ॥ आवाच्यवचनंश्रुत्वानि० ॥
मातर्होमंतुनिर्वर्त्यसमुध्दृत्यहुताशनात् ॥ शेषंमहानसेकृत्वातत्रपाकंसमाचरेत् ॥ यदिस्याल्लौकिकेपाकस्ततोन्नंतत्रहूयते ॥
शालाग्नौयदिचेदन्नंहोमंतत्रैवकारयेत् ॥ होमइतिवैश्वदेवः ॥ श्राद्धेवस्त्रादिकंचैवविप्रेभ्योदीयतेयथा ॥ पिंडेभ्योपितथादद्यादन्य
थानिष्फलंभवेत् ॥ पितृयज्ञविधानेनश्राद्धेपाकपरिक्रिया ॥ गृह्याग्नौस्यात्क्षणंदत्वातदाशौचंनविद्यते ॥ कर्मप्रारंभमारभ्यभ-
वेद्यावद्विसर्जनं ॥ यदिस्यात्सूतकंमध्येत्वासीमांतंनसूतकं ॥ स्नात्वाकूर्वीतवैपाकंश्राद्धेपत्नीविधानतः ॥ पुनःस्नायात्ततश्चैव
धारयेदन्यदंबरं ॥ संसृष्टभ्रातृभिर्युक्तोज्येष्ठःकुर्यात्समंत्रकं ॥ सकलंपैतृकंपित्रोरनुज्ञास्यतदाज्ञकाः ॥ तिथिवारादिकं
ज्ञात्वापितॄनुद्दिश्यवैयतः ॥ सज्येष्ठाअनुजाःसर्वेनिनयेयुस्तिलोदकं ॥ संसृष्टेप्रगतेज्येष्ठेबहिःश्राद्धंकनीयसा ॥ नकार्यमा-

ज्ञयाकार्यमाज्ञयाकेपिसंकटे ॥ आज्ञयाक्रियमाणंतुज्येष्ठश्रेमभ्यआगतः ॥ ज्येष्ठःकुर्याच्चतच्छेषंपिंडदानादिकंचयत् ॥ पिं-
डदानादधोज्येष्ठेक्रियमाणेतुकर्मणि ॥ कनिष्ठाश्चागताःपिंडेनिनयेयुस्तिलोदकं ॥ क्रियतेयस्यवैश्राद्धमज्ञातेकस्यचिद्यदि ॥
॥ निमंत्रयेन्नतुज्ञातिंनज्ञातिंस्वस्यवात्रतु ॥ यत्रैवपच्यतेपाकोयदिशालान्वितोगृहे ॥ संगेनपितरस्तस्यविचरंतित्यकुत्सिते ॥
॥ मंत्रानुच्चार्यकर्तैवश्राद्धकर्मसमाचरेत् ॥ नैवोच्चरेद्द्विजोभोक्तावृथास्यादुच्चरेद्यदि ॥ नजपेयुर्द्विजामंत्रान्भोक्तारःश्राद्धक-
र्माणि ॥ स्वादोःसूक्तंजपेयुस्तेनतंचयमदैवतं ॥ अथसमस्तपित्रर्चनविधिः ॥ देवानादौसमभ्यर्च्यपितृवर्गमथार्चयेत् ॥
॥ मातृवर्गंततोमातामहादेश्चयथाक्रमं ॥ पितृवर्गंमातृवर्गंवर्गंमातामहस्यच ॥ अर्चयित्वाथकारुण्यानर्चयेदितिशौनकः ॥
॥ अथान्यःपक्षः ॥ देवानाभ्यर्च्यपित्रादिवर्गवर्गंसमर्चयेत् ॥ एकस्मिन्नथवाकालेसर्वानप्यर्चयेत्पितॄन् ॥ एकोद्दिष्टवि-
धानेनवर्गेष्वेकैकमर्चयेत् ॥ तीर्थेमहालयेचैववाहित्वाद्वादशदैवतं ॥ पितृवर्गमथोमातुर्वर्गंमातामहस्यच ॥ पृथग्वर्गस्यवर्गस्य
नामान्युच्चारयेत्क्रमात् ॥ संकल्पेविधिरेषस्यात्तथाचैवानुवादयेत् ॥ तीर्थेमहालयेचैवमर्चनंस्यात्पृथक्पृथक् ॥ स्वस्याश
क्तत्वविषये ॥ रोगादिनायदाश्राद्धंस्वयंकर्तुमशक्यते ॥ पुत्रेणैवाथशिष्येणज्ञातिनावापिकारयेत् ॥ एकादश्यांश्राद्धभोज
नविचारः ॥ शौनकः ॥ श्राद्धंकृत्वातुयोविप्रोमोहादुपवसेद्यदि ॥ राक्षसंभवतिश्राद्धंसोपिगच्छेदधोगतिं ॥ एकाद-
श्यांयदाश्रात्धंभवेद्यदिकथंतदा ॥ कृत्वातूपवसेच्छ्रात्धंविधुरोविधिवापिहि ॥ श्राद्धंकृत्वागृहस्थोवैनैवकुर्यादुपोषणं ॥ पि-
तृशेषंसमश्नीयादेकादश्यांनदुष्यति ॥ मोहादुपवसेच्छ्राद्धंकृत्वाचेद्धरिवासरे ॥ समूढोनरकंयातिपितृभिःसहमज्जति ॥

॥ एतत्स्मार्तविषये ॥ अथवैष्णवविषये ॥ कण्वः ॥ एकादश्यांयदाश्राद्धंप्रसक्तंयदिवाअपि ॥ कार्यमेवाहितच्छ्राद्धमु-पवासःकथंभवेत् ॥ उपवासोयदानित्यःश्राद्धंनैमित्तिकंभवेत् ॥ कृत्वातूपवसेच्छ्राद्धंशेषमाघ्रायवैचरोः ॥ स्कांदे ॥ तएवो पवसेयुश्चेद्वैष्णवाहरिवासरे ॥ कृत्वातुविधिनाश्राद्धमाघ्रायपितृसेवितं ॥ श्राद्धंकृत्वासमाघ्रायपितृशेषंविधानतः ॥ उपवासंत तःकुर्यात्केचिदेवंविदुर्बुधाः ॥ न्यायागतधनस्तत्वज्ञाननिष्ठोतिथिप्रियः ॥ श्राद्धकृत्सत्यवादीचगृहस्थोपिविमुच्यते ॥ पितृयज्ञा त्परोधर्मःपितृयज्ञात्परंतपः ॥ पितृयज्ञात्परंकर्मनचैवास्तीहभूतले ॥ इतिश्रीमन्नारायणविरचितायांधर्मप्रवृत्तौश्राद्धप्रकर णंसमाप्तं ॥ अथदानविधिरभिधीयते ॥ तत्रादौदानप्रशंसा ॥ श्रुतिः ॥ दक्षिणावतामिदिमानिचित्रेति ॥ उच्चादिविक्षिणावंतोअस्थुरिति ॥ तस्माद्दानंपरमंवदंतीत्यादीनिश्रुतिवचनानि ॥ तथायाज्ञवल्क्यः ॥ देशेकालेउ पायेनद्रव्यंश्रद्धासमन्वितं ॥ पात्रेप्रदीयतेयत्तत्सकलंधर्मलक्षणं ॥ नविद्ययाकेवलयातपसाकेवलेनाहि ॥ विद्यातपोभ्यांयुक्तं यत्तत्धिपात्रंप्रचक्षते ॥ पात्रेदत्तंतुयत्किंचिच्छुचिर्भूत्वासमाहितः ॥ ज्ञेयंतत्सर्वमक्षय्यंमहादानादिकंचयत् ॥ ददातिप्रस्य हंयस्तुहिरण्यादिकमेवच ॥ भुक्त्वाभोगान्यथाकामान्सोश्नुतेपदमव्ययं ॥ हिरण्यमन्नमुदकंफलपुष्पादिकंचयत् ॥ यत्किं चित्प्रत्यहंदेयंयथावित्तानुसारतः ॥ दानंनैमित्तिकंदद्यात्सुसंकल्प्ययथाविधि ॥ नित्यदानेतुनैवस्यात्संकल्पादिफलादिके ॥ ॥ सर्वत्रप्राङ्मुखोदातागृहीताचउदङ्मुखः ॥ सजलंदक्षिणायुक्तंदद्याद्विप्रकरेसदा ॥ वित्तंविप्रकरेदत्तंसद्यःशतगुणंभवेत् ॥ ॥ आलस्यादथवालोभान्निष्फलंस्यादिनांतरे ॥ यत्रसंकल्पितंद्रव्यंतद्दिनेचेन्नदीयते ॥ द्विगुणंस्याद्द्वितीयेन्हितृतीयेत्रिगुणं-

भवेत् ॥ अथगोदानं ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्याद्दतःशांतिंप्रयच्छमे ॥ १ ॥ अथकपि
लागोदानं ॥ कपिलेसर्वदेवानांपूजनीयासिरोहिणि ॥ सर्वतीर्थमयेयस्माद्दतः० ॥ २ ॥ कृष्णेनमोनमस्तुभ्यंब्रह्माविष्णुशि
वात्मिके ॥ जन्मप्रभृत्तिपापानिकृष्णेनाशयमेसदा ॥ ३ ॥ अथभूदानं ॥ सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनंत-
सस्यफलदाह्यतः० ॥ ४ ॥ यस्यांरोहंतिबीजानिकालेचैवमहीतले ॥ त्वत्प्रसादाच्चसकलाममसंतुमनोरथाः ॥ ५ ॥
दानान्यन्यानिसर्वाणिकनकादीनियानीच ॥ तानिभूमिप्रदानस्यकलांनार्हंतिषोडशीं ॥ अथतिलदानं ॥ महर्षेर्गोत्रसं
भूताःकाश्यपस्यातिलाःस्मृताः ॥ तस्मात्तिलप्रदानेनममपापंव्यपोहतु ॥ ७ ॥ अथहिरण्यदानं ॥ हिरण्यगर्भगर्भस्थंहेमबीजंवि-
भावसोः ॥ अनंतपु० ॥ ८ ॥ अथाज्यदानं ॥ कामधेनोःसमुद्भूतंसर्वक्रतुपुसंस्थितं ॥ देवानामाज्यमाहारम० ॥ ९ ॥
अथधान्यदानं ॥ धन्यंकरोषिदातारमिहलोकेपरत्रच ॥ यस्मात्त्वमुच्यतेधान्यमतः० ॥ १० ॥ अथगुडदानं ॥ गुडमिक्षुरसोद्भूतं
रसानांपरमंवरं ॥ दानेनानेनमेयस्माच्छांतिरस्तुसदागृहे ॥ ११ ॥ अथशर्करादानं ॥ शर्करेक्षुरसोद्भूतासदास्वादुकराशुभा ॥
दानेनानेनमेनित्यम० ॥ १२ ॥ अथरजतदानं ॥ पितॄणांवल्लभंयस्माद्विष्णोर्वैशंकरस्यच ॥ रजतंपातुमान्नित्यंशोकसंसार
सागरात् ॥ १३ ॥ लवण० ॥ अन्नाद्याःस्वादुतांयांतिलवणेनरसाश्रये ॥ नित्यंलवणदानेनममसंतुमनोरथाः ॥ १४ ॥ अथ
नानाधान्यदानानि ॥ ब्रह्मणानिर्मिताःपूर्वंव्रीहयोयज्ञसाधनाः ॥ अनेनव्रीहिदानेनममसंतुम० ॥ १५ ॥ व्रीहिजास्तंदु
लाःशुद्धाःपितृदेवद्विजप्रियाः ॥ दानेनानेनमेसंतुसर्वकामाश्चसंपदः ॥ १६ ॥ गोधूमदा०॥धान्यचूडामणिर्जंबूद्वीपेगोधूम

संज्ञका ॥ गंधर्वैवनसंज्ञानाम० ॥ १७ ॥ यावनालाः ॥ यावनालाःप्रियकराःशांतिपुष्टिफलप्रदाः ॥ दानेनानेनवैयस्माच्छांति रस्तुसदामम ॥१८॥ माषदा० ॥ यस्माद्देवहितार्थायविष्णोर्देहसमुद्भवाः ॥ पितृतृप्तिकरामाषाःप्रयच्छंतुशुभांगति ॥१९॥ मुद्गाः ॥ मुद्गबीजानिवैयस्मात्प्रियाणिपरमेष्ठिनः ॥ तस्मादेषांप्रदानेनममसंतुग० ॥२०॥ चणकाः ॥ गोवर्धनगिरेर्भारंसमयेहरिरक्षिताः॥ ॥ चणकाःसर्वपापघ्नाममशांतिंप्रयच्छतु ॥ २१ ॥ कुलित्थाः ॥ अग्निगर्भोद्भवाःसौम्याबलारोग्ययशप्रदाः ॥ कुलित्थाः सर्वपापघ्नाह्यतः० ॥ २२ ॥ निष्पावाः ॥ निष्पावानिर्मिताःपूर्वंलोकानांचाहितायवै ॥ दानेनानेनवैयस्मादतःशां० ॥ २३ ॥ यवाः ॥ पूर्वमेवहियज्ञार्थंनिर्मिताब्रह्मणायवाः ॥ अनेनयवदानेनशांतिरस्तुसदामम ॥ २४ ॥ प्रियंगवः ॥ प्रियंगवःप्रिया- यस्मादग्नेर्वैयज्ञसाधनाः ॥ तस्मात्प्रियंगुदानेनशांति० ॥ २५ ॥ अथश्यामाकाः ॥ श्यामाकास्तुसदापुण्यानिर्मिताब्रह्मणापु रा ॥ दानेनानेनवैयस्मादतःशांतिप्र० ॥ २६ ॥ कोद्रवाः ॥ कोद्रवानिर्मितादेवैःप्राणिनांचाहितायवै ॥ यस्मात्तेषांप्रदाने- नअतः० ॥ २७ ॥ मसुराः ॥ मसुराःपुष्टिदालोकेब्रह्मणानिर्मिताहिताः ॥ तस्मादेषांप्रदानेनअतः० ॥ २८ ॥ कंबलदानं ॥ हिमनाशकरंपुण्यंकंबलंबलवर्धनं ॥ दानेनानेनवैयस्माद० ॥ २९ ॥ अन्नदानं ॥ अन्नंब्रह्ममयंसाक्षाल्लोकानांप्राणरक्षणं ॥ अन्नदानेनवैकामान्भुक्त्वासायुज्यमाप्नुयात् ॥ ३० ॥ जलदानं ॥ जलंब्रह्ममयंनित्यंजीवनंनित्यकारणं ॥ जलदानेनवैय- स्माद्वांछितंफलमश्नुते ॥ ३१ ॥ अथमंडकदानं ॥ सूर्यमंडलसंभूतासर्वमंगलदायकाः ॥ मंडकाःसर्वदोषघ्नाःशांतिदाः स्युःसदामम ॥ ३२ ॥ तैलदानं ॥ तैलंतिलसमुद्भूतंसर्वारिष्टनिवारकं ॥ दृष्टिदंपुष्टिदंचैवममानिष्टप्रशाम्य

तु ॥ ३३ ॥ नवनीतदानं ॥ क्षीरार्णवसमुद्भूतंविष्णोस्तुष्टिकरंपरं ॥ नवनीतंप्रदास्यामिप्रीतिंमेदेहिसर्वदा ॥
॥ ३४ ॥ दुग्धदानं ॥ प्राणिनांजीवनंक्षीरंपितृदेवप्रियंवदा ॥ कांतिदंपुष्टिदंनित्यमतःशां० ॥ ३५ ॥ दधिदानं ॥
दधिक्षीरोद्भवंदेवपितॄणांतृप्तिकारकं ॥ अतस्तस्यप्रदानेनशांतिर० ॥ ३६ ॥ तक्रदानं ॥ तक्रंदधिसमुद्भूतंप्राणिनांशांतिदंप
रं ॥ अतस्तक्रप्रदानेनशां० ॥ ३७ ॥ पुष्पदानं ॥ मनोहराणिपुष्पाणिसदादेवप्रियाणिच ॥ अतस्तेषांप्रदानेनशां० ॥ ३८ ॥
फलदा० ॥ फलानिमधुराणीहदेवद्विजप्रियाणिच ॥ अतस्तेषां० ॥ ३९ ॥ प्रियंस्वादुकरंनित्यंफलंदत्तंमनोहरं ॥ तेनमे
सफलावाप्तिर्भवेज्ज० ॥ ४० ॥ छत्रं ॥ संपदांभूषणंछत्रंवर्षतापनिवारणं ॥ अनेकप्रीतिदंयस्मादतः० ॥ ४१ ॥ उपानद्दा०॥
उपानहौप्रदास्यामिशिलाकंटकरक्षणे ॥ पादसंरक्षणार्थायगृहाणत्वंसुखायमे ॥ ४२ ॥ शीतलोदककुंभ० ॥ वारिणापूरितंपा
त्रंतापत्रयहरंशुभं ॥ पितॄणांतुष्टिदंस्वस्यगृहाणत्वं० ॥ ४३ ॥ व्यजनं० ॥ व्यजनंवायुदैवत्यंसर्वकालसुखावहं ॥ अस्यदाने-
नवैशांतिःसर्वदास्तुगृहेमम ॥ ४४ ॥ गृहदानं ॥ इदंगृहंगृहाणत्वंसर्वोपस्करसंयुतं ॥ तवप्रियप्रदानेनममसंतुमनोरथाः ॥ ४५
॥ चंदनं० ॥ काष्ठानामुत्तमंशैत्यंमहादेवेननिर्मितं ॥ गंधंप्रियकरंपुण्यमतः ॥ ४६ ॥ शिबिका० ॥ शिबिकासुखदानित्यंमहाल-
क्ष्मीप्रियासदा ॥ संप्रदानेनवैतस्याःसर्वदास्तुसुखंमम ॥ ४७ ॥ मंचकः ॥ मंचकोरोगसंहर्तासर्वसौख्यप्रदायकः ॥ संप्रदानेन-
मेनित्यंशांतिरस्तुसदालये ॥ ४८ ॥ शयनीयं० ॥ सुखदंशयनंयस्मात्केशवस्यप्रियंसदा ॥ दानेनानेनसौभाग्यंसर्वदास्तुगृहेमम ॥
॥ ४ ॥ कशिपुदानं ॥ मृदुनिर्बीजकार्पासपूरितंसुखदंनृणां ॥ कशिपोश्चप्रदानेनसुखंस्यात्सर्वदामम ॥ ५० ॥ तांबूलं ॥ तांबूलं

सुखदंलोकेसर्वदामंगलप्रदं ॥ प्रियंचैत्रहिदेवानामतः० ॥ ५१ तिलपात्रदानं ॥ तिलपात्रंसदापुण्यंसुवर्णतिलपूरितं ॥ दानेनानेनमेनित्यंसर्वारिष्टंप्रशाम्यतु ॥५२॥ धान्यं ॥ सर्वदेवमयंधान्यंसर्वप्रीतिकरंमहत् ॥ प्राणिनांजीवनंधान्यमतः० ॥ ५३ ॥ दासी० ॥ दासीयंप्रसहंगेहेमार्जनादिक्रियाकरी ॥ संप्रदानेनचैवास्याःसुखसंपत्सदास्तुमे ॥ ५४ ॥ शय्या०॥तांबुलपुष्पसंयुक्तांनानापरिमलैर्युतां ॥ वस्त्रेणाच्छादितांशय्यांनानारत्नसमन्वितां॥५५॥ धूपदाहान्वितंभव्यंभाजनंकांस्यनिर्मितं ॥ मंचस्योभयतोदीपंव्यजनंचसुगंधिकं ॥ ५६ ॥ सजलंकलशंदंडंवैणवंचयथातथा ॥ स्थापितंशिरसोभागेपाददेशेत्युपानहौ ॥ ५७ ॥ कर्पूरलालवंगादिद्रव्यंप्रीतिकरंशुभं ॥ सिंदुरांजनकस्तूरीहरिद्राकुंकुमांबरं ॥ ५८ ॥ सकंचुकंतथारवाद्यंविन्यसेद्भाजनेशुभे ॥ प्रसार्यार्थनवंतत्रकशिपुंचोपबर्हणं ॥ ५९ ॥ कशिपोश्चप्रदानेनसुखंस्यात्सर्वदामम ॥ ॥ ५ ॥ पुरतोगंधपात्रादितथाचैवासनंन्यसेत् ॥ ६० ॥ पृष्ठदेशेतुवैछत्रंन्यसेपूंजांसमाचरेत् ॥ ततोविप्रंसमभ्यर्च्य दानंदद्याद्यथोचितं ॥ ६१ ॥ शोभनंमंचकंनव्यंपट्टैर्वसमावृतं ॥ प्रसार्यार्थनवंतत्रकशिपुंचोपबर्हणं ॥ ६२ ॥ सोपस्कारसमायुक्तंनानारत्नोपशोभितं ॥ पुष्पतांबूलसहितंनानापरिमळान्वितं ॥ मंचकोरोगनाशघ्नःसर्वसौख्यप्रदायकः संप्रदानेनमेनित्यंशांतिरस्तुसुखालये ॥ अशून्यंशयनंयस्मादतः० ॥ शय्यास्थाचात्मनोमूर्तिगौरीशंकरयोःप्रिया॥ दानेनास्याःसुखंचास्तुशांतिर्मेपदमव्ययं ॥ ६३ ॥ दिवोज्ञानप्रदोनित्यंदेवतायाःप्रियःसदा ॥ दानेनास्यभवेत्सौख्यंशांतिर्मेपदमव्ययं ॥ सज्योतिर्गुणपात्रंचदीपवांहसमुन्नतं ॥ सुखदंचास्यदानेनशांतिरस्तुसदामम ॥ कुंकुमदानं ॥ कुंकुमंशोभनांदि

व्यंसर्वदामंगलप्रदं ॥ दानेनास्यसदासौख्यंसौभाग्यंशांतिरस्तुते ॥ ६९ ॥ सिंदूरदानं ॥ सिंदूरंशुभदंचैवगणनाथाप्रि
यंसदा ॥ दानेनास्यगृहेशांतिसुखंचास्तुसदामम ॥ ७० ॥ कस्तूरी० ॥कस्तूरीभाग्यदाभव्यादेवमर्त्यप्रियासदा ॥ दानेना-
नास्याःसुखंभाग्यंशांतिरस्तुसदामम ॥ ७१ ॥ कलशदा०कलशःशुभदोभव्योजलेनपरिपूरितः ॥ दानेनास्यसदासौख्यं
शां० ७२ ॥ गंधदानं ॥ गंधोमनोहरोभव्यःशांतिदःसुखदःसदा ॥ संप्रदानेनचैवास्यशांतिरस्तुसदामम ॥ व्यजनं०
व्यजनंवायुदैवसंघर्षकालेसुखप्रदं ॥ तस्मादस्यप्रदानेनम० ॥ ७४ ॥ कर्पूररुचिरंचित्रगृहाणेमंसुपूजितं ॥ पुण्यगंध-
स्थितासामेकमलाप्रीयतामिति ॥ ७८ ॥ दंडदानं ॥ भयनाशकरोदंडोवैणवोदेवनिर्मितः ॥ दानेनानेनचैवास्य० ॥ ताड
पत्रादि ॥ सौभाग्यद्रव्यदानंचस्त्रीभिःकार्यप्रयत्नतः ॥ सभर्तृकाभिःसंक्रांतौफलादीनांतथैवच ॥ दानंषोडशसंख्याक
मेकैकस्यचफलस्यच ॥ हेमरजतकांस्यानांभाजनानियथाक्रमं ॥ सगुडंतिलसंयुक्तंसुखंप्रीतिकरंनृणां ॥ संवर्धितंगृहा
णेदम० ॥ ८० ॥ हिरण्यादीनिपात्राणिमृद्भांडानितथापिवा ॥ गृहाणेमानिवैयस्मद्भास्करःप्रीयतामिति ॥ गो
धूमजनितंपिष्टंशिलायंत्रविनिस्सृतं ॥ द्विजश्रेष्ठगृहाणेदम० ॥ तंडुलदानं॥ तंडुलाःशालिजाःशुभ्राःसजलाःपात्रसंस्थिताः॥संप्रदा
नेनचैतेषांशां०॥सौवर्णं राजतंकांस्यंपायसान्नादिपुरितं॥ दानेनास्यचसौभाग्यंशांतिरस्तुसदावयोः ॥८४॥ अथव्यासप्रोक्तंफलपु
ष्पदानं ॥ कदलीदानं ॥ कदलीसर्वदोषघ्नीहेमवर्णावरावृता॥ दानेनास्याःसुखंभाग्यंशांतिरस्तु० ॥ हेमपात्रं० ॥ जन्मांतर
सहस्रेषुयत्कृतंदुष्कृतंमया ॥ हेमपात्रप्रदानेनममपापं० ॥ रजतपात्र० ॥ कन्यादूषणतःपापंपरदाराभिमर्शनात् ॥ रौप्य

पात्रप्रदानेनपापंगच्छतुमेसदा ॥ ताम्रपा० ॥ परापवादपैशून्यंदुष्टमांसस्यभक्षणं ॥ पापंगात्रास्थितंताम्रपात्रदानेननश्यतु ॥
॥ कांस्यपात्रं ॥ मयापापान्यनेकानिकामाकामकृतानिच ॥ कांस्यपात्रप्रदानेनतानिनश्यंतुमेसदा ॥ ५ ॥ लोहपा० ॥
॥ ज्ञानाज्ञानकृतंपापंयमलोककृतंचिरात् ॥ लोहपात्रप्रदानेनममपीडांव्यपोहतु ॥ ६ ॥ ताम्रपात्रं० ॥ सूर्यप्रीतिकरंताम्रमा-
रोग्यंबलवर्द्धनं ॥ तस्मादस्यप्रदानेनप्रीयतांमेदिवाकरः ॥ ७ ॥ कांस्यपा० ॥ कांस्यंब्रह्माशिवःसाक्षात्कांस्यमेतद्विभावसुः ॥
॥ कांस्यंविष्णुमयंयस्मादतः० ॥ ८ ॥ अथरत्नदानानि ॥ यस्मात्सर्वेषुरत्नेषुदेवाःसर्वेव्यवस्थिताः ॥ रत्नदानेनमेशांतिप्र-
यच्छंतुसदासुराः ॥ ९ ॥ माणिक्यदानं ॥ माणिक्यंपद्मरागंचवैडूर्यंवज्रमेवच ॥ गोमेदंचमरंतकंपुष्परागंचमौक्तिकं ॥ हरि
तंचनवैतानिरत्नानिचवदंतिहि ॥ मौक्तिकंभूषणंविष्णोःश्रियोगौर्याशिवस्यच ॥ दानेनास्याशिवंमेस्तुपरत्रसुखसंपदः ॥ प्र-
वाळदानं ॥ प्रवाळंपुष्टिदंकांतिवर्धनंशुभदंसदा ॥ दानेनास्यसुखंचैवशांतिरस्तुसदामम ॥ मणिदानं ॥ मांगल्यमणयो
लक्ष्म्याःप्रियागौर्याश्चसर्वदा ॥ दानेनैवसुखंशांतिःसौभाग्यंसर्वदास्तुमे ॥ ताटंक० ॥ कर्णप्रसाददंस्त्रीणांभूषणंमंगलप्रदं ॥
॥ दानेनानेनवैचास्यसौभाग्यत्वंसदास्तुमे ॥ तैलदा० ॥ तैलंपुष्टिकरंनृणांलक्ष्मीदंमंगलंशुभं ॥ दानेनास्यतुमेशांतिःस-
र्वारिष्टंप्रशाम्यतु ॥ अथगजदानं ॥ ऐरावतश्चतुर्दंतोगजानांनायकश्चयः ॥ दिग्दंतिनांचसंपूज्यमतःपापंक्षयायतु ॥ प्रभुः॥
॥ सुप्रतीकगजेंद्रत्वंसरसत्याभिषेचक ॥ इंद्रस्यवाहनश्रेष्ठसर्वदेवैश्चपूजित ॥ गजेंद्रमत्तमातंगदैत्यसैन्यविनाशक ॥ तव-
दानेनमेशांतिःसर्वदास्तुसुखंमम ॥ फलदानं ॥ इदंफलंमयादेव० ॥ तस्मात्फलप्रदानेनमम० ॥ विप्रायवेदविदुषेश्रो० ॥ नर-

कोत्तारणार्थाय० ॥ अश्वदानं ॥ अश्वोविवाहनंभानोःकारणांहितथाक्रतोः ॥ संप्रदानेनमेचास्यशांतिरस्तुसुखांशिवं ॥ वृषभदा-
नं ॥ वृषभोधुर्यएवस्यान्महादेवप्रियःसदा ॥ संप्रदानेनचैवास्यशांतिरस्तुसुखंशिवं ॥ अजदानं ॥ अजाग्निवाहोयज्ञार्थंब्रह्मणा-
निर्मितःपुरा ॥ मेषदानेनवैशांतिःसुखंचास्तुसदामम ॥ छागदानं ॥ छागःप्रियोहियज्ञानामाहुतित्वेव्यवस्थितः॥ अस्यचैवप्रदा-
नेनशांतिरस्तु० ॥ अथदेवताप्रतिमादानं ॥ मृत्युंजयमहारुद्रगौरीवृषभवाहन ॥ संप्रदानेनदेवेशममसंतुमनोरथाः ॥ शिवनाभिः
शिवःसाक्षात्सक्षान्नारायणोपिवा ॥ दानेनास्यहरिहरौप्रसन्नौस्तांसदावयोः ॥ शालिग्रामशिलापुण्याभुक्तिमुक्तिप्रदायिनी ॥
शालग्रामप्रदानेनममसंतुमनोरथाः ॥ इतिशालग्रामदानं ॥ चक्रांकितशिलापुण्याशालग्रामशिलाशुभा ॥ दानेनैवभवेत्त
स्यउभयोर्वांछितंफलं ॥ शंखदानं ॥ शंखःशुभकरोनित्यंसर्वमंगलदायकः ॥ तस्मादस्यप्रदानेनशांति० ॥ घंटादानं
घंटादेवप्रियानित्यंमहानंदकराशुभा ॥ संप्रदानेनचैवास्याःशांतिरस्तुसदामम ॥ विष्णुमूर्तिदानं ॥ नारायणजगन्नाथश्री
पतेगरुडध्वज ॥ तवमूर्तिप्रदानेनप्रसन्नोभवसर्वदा ॥ सूर्यप्रतिमादानं ॥ ग्रहाणामधिपःसूर्यःपद्महस्तप्रभाकरः ॥ तस्मा
दस्यप्रदानेन०॥गणेशप्रतिमा०॥गणनाथोविघ्नहरोगौरिसूनुरभीष्टदः ॥ अस्यदानेनमेशांतिःप्रसन्नोभूद्विनायकः ॥ जगदंबादा
नं ॥ आदिमायामहाशक्तिर्विश्वमाताजगन्मयी ॥ दानेनास्याःप्रसन्नास्तुसर्वदाममशांभवी ॥ पुस्तक० ॥ सरस्वतिज-
गन्मातःशद्धब्रह्मादिदैवते ॥ पुस्तकस्यप्रदानेनरक्षमांपरमेश्वरि ॥ सोपस्करसमायुक्ताप्रियामूर्तैसदाक्षिणा ॥ गृहाणत्वं
द्विजश्रेष्ठममसंतुमनोरथाः॥ देशकालउपायेनद्रव्यंश्रद्धासमन्वितं ॥ पात्रेप्रदीयतेयत्तत्सकलंधर्मलक्षणं ॥ ददातिप्रतिगृण्हाति

हिरण्यादिकमेवच ॥ भुक्ताभोगान्यथाकामंसोश्नुतेपदमव्ययं ॥ अथोभयतोमुखी ॥ यावद्वत्सस्यपादौद्वौमुखंयोन्यांचदृश्यते ॥ तावद्गौःपृथिवीज्ञेयायावद्गर्भंनमुंचति ॥ संपूज्यतांसमस्तांयःकरोतिप्रदक्षिणं ॥ सार्णवांसकलांपृथ्वींसप्रदक्षिणकृद्भवेत् ॥ सुपूजितामिमांगांयोददात्युभयतोमुखीं ॥ सागरांतोर्विदानेनतत्फलंलभतेध्रुवं ॥ सालंकृतांगृहाणेमांददाम्युभयतोमुखीं ॥ विष्णुरूपद्विजश्रेष्ठत्राहिमांभवसागरात् ॥ अथमहिषीदानं ॥ गृहाणमहिषींगृष्टींसवत्सांस्वर्णभूषितां ॥ ॥ सुनेत्रांचसुशृंगांचश्यामांसंपूर्णविग्रहां ॥ पयस्विनींसुशीलांतांदारिद्र्यतिमिरापहां ॥ हेमशृंगींरौप्यखुरींकांस्यघंटासमन्वितां ॥ सुसंभारावृतांरम्यांसालंकारांसदक्षिणां ॥ महिषींवस्त्रसंयुक्तांसुशीलांचपयस्विनीं ॥ नीलवस्त्रावृतांचाहंदास्येमृत्युहरायच ॥ यमवाहासुमहिषीमृत्युरूपेणसंस्थिता ॥ सर्वव्याधिहरासिसम० ॥ सवत्संसजलंशृंगंधृत्वाविप्रकरेर्पयेत् ॥ ॥ कांस्यपात्रस्थितेपाणौदद्याद्दानेसदक्षिणां ॥ मृत्युरूपांगृहाणेमांमहिषींद्विजसत्तम ॥ मृत्योःसंत्राहिमांघोरात्गच्छत्वंयत्रकुत्रवा ॥ ततोबहिर्द्विजोगच्छेच्छिरस्येदुदकंपाथि ॥ तैलेनवाजलेनापिपुनश्चतर्पयेद्यमं ॥ आज्यावलोकनंकुर्याद्दशदानानिवैयतः ॥ अन्येभ्यश्चैवविप्रेभ्योदद्याच्छक्त्याचदक्षिणां ॥ अनेनविधिनाचैवमहिषीदानमुत्तमं ॥ यःकरोतिनरस्तस्यनचमृत्युभयंकचित् ॥ इतिमहिषीदानविधिः ॥ ऋतुपरत्वेदानमाह ॥ सम्यक्दद्याद्वसंतेन्नंजलंस्वादुसुशीतलं ॥ गंधपुष्पादिकंचैवब्राह्मणेभ्योविशेषतः ॥ ग्रीष्मेचोपानहौछत्रमन्नपानादिकंचहि ॥ हेमंतेपितथाचैवप्रदद्यादिंधनादिकं ॥ चित्रान्नंशैशिरेदद्यात्सर्पिर्दधिसमन्वितं ॥ ऋतुष्वेवंचतुर्थेषुकेचिदिच्छंतिसर्वदा ॥ नशक्तोत्यसमर्थश्चेन्नरोदातुंनदापयेद ॥ पुण्यकालेथ

वादद्याच्चितंवित्तादिकंयदा ॥ पुण्यकालःसविज्ञेयश्चित्तंवित्तंयदाभवेत् ॥ अनित्यंचशरीरंस्यात्तस्माद्दानंसमाचरेत् ॥ इति
॥६१॥ नारायणप्रवृत्तौदानप्रकरणं ॥ अथभूशुद्धिः ॥ भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणादथ ॥ सेकादुल्लेखनाच्छेपात्गृहंमार्ज
नलेपनात् ॥ निर्लेपंकांचनंभांडमद्भिरेवविशुध्यति ॥ अब्जमश्ममयंचैवराजतंचानुपस्कृतं ॥ गवाघ्रातानिकांस्यानिशूद्रो
च्छिष्टानियानिच ॥ शुध्यंतिदशभिःक्षारैःश्वकाकोपहतानिच ॥ भस्मनाशुध्यतेकांस्यंसुरयायन्नलिप्यते ॥ सुरामूत्रपुरीषै
स्तुशुध्यंतेत्युपलेपनैः ॥ ताम्रमाम्लेनशुध्येतनचेदामिषलेपितं ॥ आमिषेणतुयल्लिप्तंपुनर्दाहेनशुध्यति ॥ सूतिकोच्छिष्टभां
डस्यसुरामेध्यहतस्यच ॥ त्रिःसप्तमार्जनाच्छुद्धिर्नतुकांसस्यतापनं ॥ सूतिकाश्वानविण्मूत्ररजस्वलाहतानिच ॥ प्रक्षेप्तव्या
नितान्यग्नौयद्यद्यावदहेदपि ॥ सुवर्णरौप्यशंखाश्ममुक्तारत्नमयानिच ॥ कांस्यायस्ताम्रपात्राणित्रपुसीसादिकानिच ॥ नल्ले
पितानिशुध्यंतिकेवलेनजलेनतु ॥ शूद्रोच्छिष्टानशुध्यंतित्रिधाक्षाराम्लवारिणः ॥ ब्रह्मक्षत्रविशांचैवसकृत्संमार्जितंशुचि ॥
॥ व्रीहयःप्रोक्षणादाद्भिःशाकमूलफलानिच ॥ तन्मात्रस्यापहाराद्वानिस्तूपीकरणेनवा ॥ चांडालाध्युषितेयत्र
यत्रमूत्रादिसंगतिः ॥ एवंकश्मलभूयिष्ठाभूरमेध्याप्रकीर्तिता ॥ श्वसूकरखरोष्ट्राद्यैःसंस्पृष्टादुष्टतांव्रजेत् ॥
॥ अंगारतुषकेशास्थिभस्माद्यैर्मलिनाभवेत् ॥ यस्यवास्यादमेध्यासामृत्युर्वाप्रसवोपिच ॥ पंचधावाचतुर्धा
वापूर्ववद्भूर्विशुध्यति ॥ इतिभूतशुद्धिः ॥ अथगृहशुद्धिः ॥ गृहशुद्धिंप्रवक्ष्यामित्वंतस्त्वांशवदूषणे ॥ प्रोत्सृ ॥६१॥
ज्यमृन्मयंभांडंशुद्धमन्नंतथैवच ॥ गृहपादस्यतत्सर्वंगोमयेनोपलेपयेत् ॥ अद्भिःसंप्रोक्ष्यचैवाथश्वानेनघ्रापयेद्बुधः ॥ व्राह्म-

णैर्मंत्रपूतैश्चहिरण्यकुशवारिणा ॥ सर्वमभ्युक्षयेद्विद्वांस्ततःशुध्येतदसंशयः ॥ इतिगृहशुद्धिः ॥ अथपात्रशुद्धिः ॥ निर्लेप कांचनंभांडमद्भिरेवविशुध्यति ॥ अब्जमश्ममयंचैवराजतंचानुपस्कृतं ॥ चरुस्रुक्स्रुवमस्नेहपात्राण्युष्णेनवारिणा ॥ सलेपा नामलेपानांवारिणाशुद्धिरिष्यते ॥ यज्ञसाधनभूतानांपात्राणांचैवसर्वदा ॥ स्रुवादीनांचसर्वेषांवारिणाशुद्धिरिष्यते ॥ गवाघ्रातानिकांस्यानिशूद्रोच्छिष्टानियानिच ॥ शुध्यंतिदशभिःक्षारैःश्वकाकोपहतानिच ॥ भस्मनाशुध्यतेकांस्यंसुरयायन्न लिप्यते ॥ सुरामूत्रपुरीषैस्तुशुध्यंतेतप्तुपलेपनात् ॥ ताम्रमाम्लेनशुध्येतनचेदामिषलेपनं ॥ आमिषेणतुयल्लिप्तंपुनर्दाहेनशुध्यति ॥ सू तिकोच्छिष्टभांडस्यसुरामेध्यहतस्यच ॥ त्रिःसप्तमार्जनाच्छुद्धिःनतुकांस्यस्यतापनं ॥ सूतिकाश्वानविण्मूत्ररजस्वलाहतानिच ॥ प्रक्षेप्तव्यानितान्यग्नौयावद्यावद्दहेदपि ॥ सुवर्णरौप्यशंखाश्मशुक्तिरत्नमयानिच ॥ कांस्यायस्ताम्रपात्राणित्रपुसीसादिकानिच ॥ निर्लेपनानिशुध्यंतिकेवलेनजलेनतु ॥ शूद्रोच्छिष्टानिशुध्यंतित्रिधाक्षाराम्लवारिभिः ॥ ब्रह्मक्षत्रविशांचैवसकृत्संमार्जनाच्छुचिः ॥ चतुर्थेनतुयद्भुक्तंचतुर्भिस्तत्रमार्जनं ॥ अग्नौप्रक्षिप्यगृण्हीयाद्धस्तंप्रक्षाल्ययत्नतः ॥ गोशृंगेणतुसंस्पृष्टंतत्पात्रंशुचितामियात् ॥ गंडूषंपादशौचंचयःकुर्यात्कांश्यभाजने ॥ षण्मासंभुविनिक्षिप्यउत्धृत्यपुनःसाधयेत् ॥ लोहानांदहनाच्छुद्धिर्भस्मनागोम येनवा ॥ दहनात्खननाद्वापिशैलानामंभसापिवा ॥ काष्टानांप्रोक्षणाच्छुद्धिमृद्गोमयजलैरपि ॥ एवंभोजनपात्राणांमुक्तो यंपूर्वसूरिभिः ॥ संहतानांतुपात्राणांयद्येकमुपहन्यते ॥ तस्यैवशोधनंप्रोक्तमासान्यद्रव्यशुद्धिश्च ॥ इतिपात्रशुद्धिः ॥ ॥ अथ धान्यशुद्धिः ॥ व्रीहयःप्रोक्षणाद्भिःशाकमूलफलानिच ॥ तन्मात्रस्यापहाराद्वानिस्तुषीकरणेनवा ॥ गृहदाहे

समुत्पन्नेपशौदग्ध्येचमानूपः ॥ आभोज्यस्तद्गतोव्रीहिर्धर्माच्चुद्रव्यसंगृहाः ॥ मृन्मयेनावदानानामधोभुविचतिष्ठति ॥ यवमा
षतिलादीनांनदोषंमनुरब्रवीत् ॥ नचात्रपाणिनोयत्रकेवलंगृहदीपनं ॥ तत्रद्रव्याणिसर्वाणिगृण्हीयादविचारयन् ॥ धान्य
पूगतृणानांचकाष्ठानांचैवसर्वदा ॥ क्लिन्नानांवाप्यक्लिन्नानांमारुतेनैवशुध्यति ॥ इतिधान्यशुद्धिः ॥ अथान्नशुद्धिः ॥
पक्षिजग्धंगवाघ्रातमवधूतमवाक्षुतं ॥ दूषितंकेशकीटैश्चन्मृत्क्षेपेणविशुध्यति ॥ देवद्रोण्यांविवाहेषुयज्ञेषुप्रकृतेषुच ॥ काकैः
श्वभिश्चसंस्पृष्टमन्नंतंनविसर्जयेत् ॥ तन्मात्रमन्नमुद्धृत्यशेषंसंस्कारमर्हति ॥ बहुष्वेववविजानीयात्कृतेष्वन्नेषुवैयतः ॥ पक्वंद्रोणा
दधिकंत्वन्नंकाकश्वाद्युपातितं ॥ ग्रासमुद्धृत्यतन्मात्रंयत्तुलालकृतोभवेत् ॥ हेमोदकेनवाभ्युक्ष्यराजतेनांबुनाथवा ॥ अग्नि
ज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषा ॥ द्रव्याणांप्लावनेनैवघनानांप्रोक्षणेनवा ॥ छागेनचोपसंस्पृष्टमन्नंतच्छुचितामियात् ॥
श्रपणंघृततैलानांप्लावनंगोरसस्यच ॥ भांडानिप्लावयेदद्भिःशाकमूलफलानिच ॥ द्रव्याणांचैवसर्वेषांशुद्धिरुत्पवनंस्मृतं ॥
प्रोक्षणंसंहतानांचदारवाणांचतक्षणात् ॥ घृतंचैवदधिक्षीरंतथैवेक्षुरसोगुडः ॥ शूद्रभांडस्थितंतक्रंतथामधुनदुष्यति ॥ आ
ममांसंघृतंक्षौद्रंस्नेहाश्चफलसंभवाः ॥ म्लेंछभांडस्थितादुष्यानिष्कृताशुचयस्कृतः ॥ निर्यासानांगुडानांचलवणानांतथैवच ॥
कुसुंभकुसुमानांचतूर्णाकार्पासयोस्तथा ॥ मृत्पर्णतृणकाष्ठानांश्वाभिश्चांडालवायसैः ॥ स्पर्शनेविहितंशौचंसोमसूर्यादिमारुतैः ॥
उच्छिष्टेनतुसंस्पृष्टोद्रव्यहस्तःकथंचन ॥ इतिअन्नशुद्धिः ॥ अथजलशुद्धिः ॥ अविगंधारसोपेतानिर्मलाःपृथिवींगताः ॥ अ
क्षीणाश्चैवगोपानाआपःशुद्धिकरास्मृताः ॥ भूमिस्थमुदकंमेध्यंतृप्तायत्रतुगौर्भवेत् ॥ अवाप्तमेदंमध्येनतद्वदेवशिलागतं ॥

॥ उद्धृतावाप्रशस्तास्तु शुद्धपात्रेयथाविधि ॥ एकरात्रोषितास्तास्युस्त्वभेदापःसमुद्धृताः ॥ अक्षोभ्यानितडागानिनदीवा
पिसरांसिच ॥ चंडालाद्यशुचिस्पर्शेनतीर्थंपरिवर्जयेत् ॥ वापीकूपतडागेषुमानुषंशीर्यतेयदि ॥ अस्थिचैववाविनिर्मुक्तेचिर
कालोभवेद्यदि ॥ उद्धरेदुदकंसर्वंपंचपिंडान्मृदांतथा ॥ प्रक्षिपेत्पंचगव्यंचततःशुद्धिमवाप्नुयात् ॥ श्वभिश्चकाकचांडालै
र्दूषितेषुविशोधनं ॥ घटानांशतमुद्धृत्यपंचगव्यंक्षिपेत्ततः ॥ उपानच्छ्लेष्मविण्मूत्रस्त्रीरजोमद्यमेवच ॥ एभिस्तुदूषितःकूपोकुं
भानांषष्टिमुद्धरेत् ॥ जलाशयेस्वल्पजलेस्थावरेचमहीतले ॥ कूपवत्कथिताशुद्धिर्महत्सुनचदूषणं ॥ चांडालभांडसंस्पृष्टं
पीत्वाकूपगतंजलं ॥ गोमूत्रयावकाहारैस्त्रिरात्रेणैवशुध्यति ॥ अजागावोमहिष्यश्चब्राह्मण्यश्चप्रसूतिकाः ॥ दशरात्रेणशु-
ध्यंतिभूमिस्थंचनवोदकं ॥ इतिजलशुद्धिः ॥ अथवस्त्रशुद्धिः ॥ अहतंचनवंश्वेतंसदशंनान्यधारितं ॥ पवित्रंतद्विजानी
याद्वस्त्रंसकलकर्मसु ॥ वस्त्रंमृदंभसाशुध्येद्रज्जुर्वैदलमेवच ॥ रज्ज्वादिकंचदुष्टंचेत्त्यजेत्तन्मात्रमेवच ॥ यदिमूत्रपुरीषाभ्यांरेत
सारुधिरेणवा ॥ चैलंसमुपहन्येतत्तद्भिःप्रक्षालयेत्ततः ॥ अद्भिस्तुप्रोक्षणाच्छौचंबहूनांधान्यवाससां ॥ प्रक्षालनेनत्वल्पा-
नामद्भिःशौचंविधीयते ॥ ऊर्णाकौशेयकुतुपपट्टक्षौमदुकूलजाः ॥ अल्पशुद्धाभवंत्येतेशोषणात्प्रोक्षणादिभिः ॥ तान्येवाम
ध्ययुक्तानिक्षालयेच्छोधनैःस्वकैः ॥ तूलिकामुपधानंचपुष्पंरक्तांबरंतथा ॥ शोषयित्वातपेकिंचित्करैःसमार्जयेन्मुहुः ॥
॥ पश्चात्तुवारिणाप्रोक्ष्यविनियुंजीतकर्मणि ॥ चैलवच्चर्मणांशुद्धिर्वैदलानांतथैवच ॥ शाकमूलफलानांचधान्यवच्छुद्धिरि
ष्यते ॥ जलभस्महरिद्राभिर्लेपनंकथ्यतेबुधैः ॥ तैलगोमयगोमूत्रैश्चर्मणांशुद्धिरिष्यते ॥ आविकंपट्टमूलंचपवित्रंचैवसर्व

दा ॥ अमेध्यलेपनेचैतस्यात्तावत्प्रक्षालनंस्मृतं ॥ पत्रपुष्पकुशादीनिधृत्वावासोपिशुध्यते ॥ एषामाचमनेनस्याच्छुद्धिरेवं
विदुर्बुधाः ॥ रथ्याकर्दमतोयानिनावःपथितृणानिच ॥ मारुतेनैवशुध्यंतिपक्वेष्टिकाचितान्यपि ॥ रेतःस्पृष्टंशवस्पृष्टंस्पृष्टं
मूत्रपूरीषयोः ॥ रजस्वलाभिःसंस्पृष्टंमूर्णावातेनशुध्यति ॥ इतिवस्त्रशुद्धिः ॥ अथदेहशुद्धिः ॥ अद्भिर्गात्राणिशुध्यंति
मनःसत्येनशुध्यति ॥ विद्यातपोभ्यांशुद्धात्माबुद्धिर्ज्ञानेनशुध्यति ॥ अजाश्वामुखतोमेध्यागावोमेध्याश्चपृष्ठतः ॥ योषितः
सर्वतःशुद्धाःकारुहस्तःशुचिःसदा ॥ एवंसंक्षेपतःशुद्धिःसर्वेषांकथिताबुधैः ॥ विज्ञेयाशुद्धिरन्येषांविशेषाःस्मृतितोन्यतः ॥
॥ इतिश्रीमन्नारायणविरचितायांधर्मप्रवृत्तौद्रव्यशुद्धिप्रकरणं ॥ अथप्रायश्चित्तान्युच्यंते ॥ कृतानांचैवपापानांज्ञानाज्ञान
कृतेपिवा ॥ उच्यतेपापिनांशुद्ध्यैप्रायश्चित्तविनिर्णयः ॥ वेदवेदांगतत्वज्ञाःधर्मशास्त्रविशारदाः ॥ स्वधर्मनिरतादांताते
षांपापंनिवेदयेत् ॥ एकोवावेदविद्धर्मंयोव्याचष्टेसमाहितः ॥ सविज्ञेयःपरोधर्मोनाज्ञानांनियुतोनतु ॥ विज्ञाप्यनखरोमाणि
प्रवाप्यस्नानमाचरेत् ॥ केशानांवपनंकृत्वाप्रायश्चित्तंसमाचरेत् ॥ केशानांरक्षणार्थायद्विगुणंव्रतमाचरेत् ॥ रा-
जावाराजपुत्रोवाब्राह्मणोवाबहुश्रुतः ॥ सर्वान्केशान्समुद्धृत्यछेदयेदंगुलद्वयं ॥ सर्वत्रैवहिनारीणांशिरसोमुंडनंस्मृतं ॥
॥ भस्मगोमयमृद्वारिपंचगव्यादिकल्पितैः ॥ मलापकर्षणंकार्यंबाह्यशौचापनुत्तये ॥ सम्यक्स्नात्वाशुचिर्भू-
त्वासार्द्रवासाःसमाहितः ॥ प्रदक्षिणात्रयंकृत्वापापानितुनिवेदयेत् ॥ सभांनत्वाप्रकुर्वीतकथ्यंनासमंजसं ॥
अश्रुतान्विब्रुवन्यापिनरोभवतिकिल्बिषी ॥ योज्ञात्वाधर्मशास्त्राणिप्रायश्चित्तंप्रयच्छति ॥ प्रायश्चित्तीभवेत्पूतोयत्कारकि-

ल्बिषंव्रजेत् ॥ अनर्चितमनाहूतमपृष्टंचयथाविधि ॥ प्रायश्चित्तंनदातव्यंज्ञानवद्भिरपिद्विजैः ॥ प्रायश्चित्तमकुर्वाणाःपापेषु
निरताद्विजाः ॥ अपश्चात्तापिनःकष्टान्नरकान्यांतिदारुणान् ॥ तामिश्रंलोहशंकुंचमहानिरयशाल्मलिं ॥ रौरवंकुतलंपू-
तिमृत्तिकंकालसूत्रकं ॥ संघातंलोहितोदंचसविषंसंप्रतापनं ॥ महानरककाकोलंसंजीवनमहापथं ॥ अवीचिमंधतामिस्रं
कुंभीपाकंतथैवच ॥ असीपत्रावनंचैवपतनंचैकाविंशतिः ॥ महापातकजैर्घोरैरुपपातकजैस्तथा ॥ अनुयांतित्वनाचीर्णप्राय-
श्चित्तानराधमाः ॥ विहितस्याननुष्ठानान्निंदितस्यनिषेवणात् ॥ अनिग्रहाच्चेंद्रियाणांनरःपतनमृच्छति ॥ तस्मादेनेनक
र्तव्यंप्रायश्चित्तंविशुद्धये ॥ एवमस्यांतरात्माचलोकश्चैवप्रसीदति ॥ प्रायश्चित्तैरपैत्येनोयदज्ञानकृतंभवेत् ॥ कामतोव्यवहा
र्यस्तुवचनादिहजायते ॥ ब्रह्महामद्यपस्तेयीतथैवगुरुतल्पगः ॥ एतेमहापातकिनोयश्चतैःसहसंवसेत् ॥ हंतानुमंतोपदेष्टाव-
क्ता.दातातथैवच ॥ युद्धोपदेशकश्चैवतथासंप्रतिघातकः ॥ प्रोत्साहकःसहायश्चतथामार्गानुदर्शकः ॥ अनिषिद्धाक्षमोयस्तु
सर्वेब्रह्महनःस्मृताः ॥ अकार्यकारिणामेषांप्रायश्चित्तंप्रकल्पयेत् ॥ आक्रुष्टताडितोवापिधनैर्वाविप्रयोजितः ॥ समुद्दिश्ययस्य
जनाणांस्तमाहुर्ब्रह्मघातकं ॥ असंबंधेनयःकश्चिद्द्विजःप्राणान्परित्यजेत् ॥ तस्यैवतद्भवेत्पापंनतुयंपरिकीर्तयेत् ॥ गुरूणा
मध्यविक्षेपोवेदनिंदासुहृद्वधः ॥ ब्रह्महत्यासमंचेदमधीतस्यचनाशनं ॥ यज्ञेविवाहकार्येचत्वन्यस्मिन्धर्मकर्मणि ॥ विघ्नं-
समाचरेद्यस्तुतमाहुर्ब्रह्मघातकं ॥ निषिद्धभक्षणंचैवउत्कर्षेचवचेभृतं ॥ रजःस्वलामुखास्वादःसुरापानसमंभवेत् ॥ अश्वर
त्नमनुष्यस्त्रीभूधेनुहरणंतथा ॥ निक्षेपस्यचसर्वंहिसुवर्णस्तेयसंमितं ॥ सखीभार्याकुमारीषुस्वयोनिष्वंत्यजासुच ॥ पितृष्व-

सामातुलानीस्नुषामातृस्वसाअपि ॥ मातुःसपत्नींभगिनींआचार्यतनयांतथा ॥ आचार्यपत्नींस्वसुतांगच्छंस्तुगुरुतल्पगः ॥
॥ छित्वालिंगंवधस्तस्यसकामायाःस्त्रियास्तथा ॥ अथोपपातकानि ॥ गोवधोव्रात्यतास्तेयमृणानांचानपक्रिया ॥ अना
हिताग्नितापण्यविक्रयःपरिवेदनं ॥ भृताद्ध्ययनादानंभृतकाध्यापनंतथा ॥ पारदार्यंपारिवेद्यंवार्धुष्यंलवणक्रिया ॥ स्त्रीशूद्रवि
ट्क्षत्रवधोनिंदितार्थोपजीवनं ॥ नास्तिक्यंव्रतलोपस्तुसुतानांचैवविक्रयः ॥ धान्यकूप्यपशुस्तेयमयाज्यानांचयाजनं ॥
॥ कन्यादिदानंतस्यैवकौटिल्यंव्रतलोपनं ॥ आत्मनोर्थेक्रियारंभोमद्यपस्त्रीनिषेवणं ॥ स्वाध्यायाग्निसुतत्यागोबांधवत्यागए
वच ॥ इंधनार्थेद्रुमच्छेदःस्त्रीहिंसौषधिजीवनं ॥ हिंस्रयंत्रविधानंचव्यसनादात्मविक्रयः ॥ शूद्रसख्यंहीनसख्यंशूद्रयोनिनि
षेवणं ॥ तथैवानाश्रमेवासःपरान्नपरितुष्टता ॥ असच्छास्त्राधिगमनमाकरेष्वधिकारिता ॥ भार्याविक्रयणंचैवमेकैकमुप-
पातकं ॥ महापातकतुल्यानिपापान्युक्तानियानितु ॥ तानिपातकसंज्ञानितन्न्यूनमुपपातकं ॥ ब्राह्मणस्यरुजंकृत्वाघ्राति
चाघ्रेयमद्ययोः ॥ ज्यैह्म्यंचमैथुनंपुंसिजातिभ्रंशकरंस्मृतं ॥ खरोष्ट्राश्वमृगेभानामजाविकवधस्तथा ॥ संकरीकरणंप्रोक्तंमाहि
षस्यवधस्तथा ॥ निंदितेभ्योधनादानंवाणिज्यंशूद्रसेवनं ॥ अपात्रीकरणंप्रोक्तंअसत्यस्यचभाषणं ॥ क्रिमिकीटवयोहि
त्यामेध्यदुर्गंधिसेवनं ॥ मलिनीकरणंप्रोक्तमुक्तादन्यत्रकीर्त्तितं ॥ अथप्रायश्चित्तं ॥ शिरःकपालीध्वजवान्भिक्षाशीकर्म
वेदयन् ॥ ब्रह्महाद्वादशाब्दानिमितभुक्शुध्यतामिति ॥ तच्चरेद्ब्रह्महासर्वंव्रतंद्वादशवार्षिकं ॥ समासेतुशतंदद्याद्गवामरिम
न्व्रतेसति ॥ अज्ञात्वाब्राह्मणंहत्वासामान्यंद्विजसत्तमः ॥ प्रायश्चित्तमिदंकुर्याद्विधिनाद्वादशादिकं ॥ ब्राह्मणस्यापरित्रा

॥६४॥

णात्गवांद्वादशकस्यवा ॥ तथाश्वमेधावभृतस्नानाद्वाशुद्धिमाप्नुयात् ॥ दीर्घतीव्रामयग्रस्तंब्राह्मणंगामथापिवा ॥ दृष्ट्वा पथिनिरातंकंकृत्वातुब्रह्महाशुचिः ॥ आनीयविप्रसर्वस्वंहृतंघातितएववा ॥ तन्निमित्तंक्षतःशस्त्रैर्जीवतोपिविशुध्यति ॥ अरण्येनियतोजप्त्वात्रिःकृत्वावेदसंहितां ॥ हत्वागुरुंश्रोत्रियंचआहिताग्निमथापिवा ॥ अज्ञानतोयदाहन्याद्द्विगुणंव्रतमाचरेत् ॥ ॥ तदात्मानंदहेदग्नौनिहन्याद्यदिकामतः ॥ एतदुक्तंब्राह्मणस्यद्विगुणंक्षत्रियस्यतु ॥ वैश्यस्यत्रिगुणंप्रोक्तंशूद्रादीनांचतुर्गुणमित्यादि ॥ इतिब्रह्महत्यादिप्रायश्चित्तं ॥ गौडीपैष्टीचमाध्वीचविज्ञेयात्रिविधासुरा ॥ यथैवैका तथासर्वानपातव्याद्विजोत्तमैः ॥ सुरावैमदमत्तानांपाप्माचमलमुच्यते ॥ तस्माद्ब्राह्मणराजन्यौवैश्यश्चनसुरांपिबेत् ॥ मधुकंचैक्षवंक्षीरंतालंखर्जूरनारिकं ॥ नपातव्यंद्विजैर्मद्यमपेयंयावनालकं ॥ सुरांबुघृतगोमूत्रपयसामग्निसंनिभं ॥ सुरापान्यतमंपीत्वामरणंशुद्धिमाप्नुयात् ॥ बालवधाद्राजवधाद्ब्रह्महत्याव्रतंचरेत् ॥ पिण्याकंवाकणान्वापिभक्षयेत्तुसदानिशि ॥ अज्ञानात्तुसुरांपीत्वारेतविण्मूत्रमेववा ॥ पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजातयः ॥ पतिलोकन्नसायातिब्राह्मणीवासुरांपिबेत् ॥ इहैवसाशुनीगृध्रीसूतकीचैवजायते ॥ आपःसुराभाजनस्थामद्यभांडस्थितास्तथा ॥ प्राजापत्यंचरेत्पीत्वाछर्दित्वोपवसेद्दिवं ॥ ॥ इतिसुरापानप्रायश्चितं ॥ अथस्वर्णस्तेयप्रायश्चित्तं ॥ ब्राह्मणःस्वर्णहारीतुराज्ञेमुसलमर्पयेत् ॥ स्वकर्मख्यापयंस्तेनहतोमुक्तोपिवाशुचिः ॥ अनिवेद्यनृपेशुध्यैसुरापव्रतमाचरेत् ॥ आत्मतुल्यसुवर्णंतुदद्याद्विप्रायतुष्टिकृत् ॥ सुवर्णंतुसुवर्णमाषपरिमितं ॥ अपहृत्यसुवर्णस्यमाषमात्रंद्विजाधमः ॥ गोमूत्रयावकाहारैःस्त्रिभिर्मासैर्विशुध्यति ॥ रौप्यंहृत्वाद्विजोमोहाच्चरेच्चांद्रय

णंव्रतं ॥ गनणंदशकादूर्ध्वंद्विगुणांत्रिगुणंचरेत् ॥ इतिस्वर्णस्तेयं ॥ अथगुरुतल्पप्रायश्चित्तं ॥ गुरुतल्पगस्सूर्मिज्वलन्मार्ज-
मीवविशुध्यति ॥ स्वयंवाशिश्नवृषणंनिकृत्वाधार्यचांजलौ ॥ निर्ऋतिदिशमातिष्ठेदानिपातादजिह्मकः ॥ पितृभार्यांतुवि-
ज्ञायसवर्णांयोधिगच्छाति ॥ जननींवाप्यविज्ञायमृतःशुद्धिमवाप्नुयात् ॥ गुरोःक्षत्रसुतांभार्यांपुनर्गत्वात्वकामतः ॥ लिंगाग्रंछे
दयित्वातुततःशुध्येत्सकिल्बिषात् ॥ गुरोर्भार्यांतुयोवैश्यांपुनर्गत्वात्वकामतः ॥ अंडमात्रंसमुत्कृत्यशुध्येजीवन्मृतोपिवा ॥
पुनःशूद्रांगुरोर्गत्वायदिविप्रोविमोहितः ॥ ब्रह्मचाहतदुष्टात्मा्द्वादशाब्दव्रतंचरेत् ॥ एतत्व्रतविशुद्धिस्तुपतितेषुउदाहृता ॥
स्त्रीणामतीष्टसक्तानामेषएवविधिःस्मृतः ॥ अथसंसर्गप्रायश्चित्तं ॥ योयेनपतितेनैवसंसर्गंयातिमानवः ॥ सतस्यैवव्रतंकुर्यात्तत्सं
सर्गविशुद्धये ॥ एभिस्तुसंवसेद्योवैवत्सरंवापितत्समः ॥ कन्यांसमुद्वहेदेषांसोपवासामकिंचनां ॥ यजनंयोनिसंबंधंस्वाध्यायंसह
भोजनं ॥ कृत्वासद्यःपतत्येवपतितेननसंशयः ॥ संलापस्पर्शशयनंसहयानासनाशयात् ॥ याजनाध्ययनाद्दानात्पापंसममतं
नृणां ॥ संसर्गमाचरेद्विप्रःपतितादिष्वकामतः ॥ पंचाहंवादशाहंवाद्वादशाहमथापिवा ॥ मासार्धंमासमेकंवामासत्रयम
थापिवा ॥ अब्दार्धमब्दमेकंवाभवेदूर्ध्वंतुतत्समः ॥ पंचाहेतुचरेत्कृच्छ्रंद्वादशाहेतप्तकृच्छ्रकं ॥ पराकस्त्वर्धमासेस्यान्मासेचांद्राय
णंचरेत् ॥ मासत्रयेतुकुर्वीतकृच्छ्रचांद्रायणोत्तरं ॥ षण्मासिकेतुसंसर्गेषडब्दंव्रतमाचरेत् ॥ इतिमहापातकप्रायश्चित्तं ॥ अ-
थोपपातकप्रायश्चित्तं ॥ बाल्यप्रभृतियत्पापमज्ञात्वाचोपपादितं ॥ षडब्देनैवशुध्येतमहतःपातकादृते ॥ उपपातकमभ्यस्तं
महापातकतांव्रजेत् ॥ द्वादशाब्दकृतेनैवतस्यशुद्धिस्तुनान्यथा ॥ कृतोपवासोवसेद्गोष्ठेचर्मणातेनसंवृतः ॥ चतुर्थेहनिचा

श्चीयादक्षारलवणंमितं ॥ गोमूत्रेणाचरेत्स्नानंद्वौमासौनियतेंद्रियः ॥ दिव्यनुगच्छतांगास्तास्तिष्ठन्नूर्ध्वंरजःपिबेत् ॥ तिष्ठंति ष्वनुनिष्ठेतचरंतीताष्वनुव्रजेत् ॥ आसीनास्तुतथासीतानियतोजितमत्सरः ॥ आतुरामभिषिक्तांवाचोरव्याघ्रादिभिर्भयात् ॥ पतितांपंकमग्नांवासर्वप्राणैर्विमोचयेत् ॥ नकुर्वीतात्मनस्त्राणंगोस्तुकुर्यात्सशक्तितः ॥ अनेनविधिनायस्तुकृत्वागाःसम नुव्रजेत् ॥ सगोहत्याकृतंपापंत्रिभिर्मासैर्विशुध्यति ॥ वृषभैकादशागास्तुदद्यात्सुचरितव्रतः ॥ अविद्यमानेसर्वस्वंवेदविद्भ्योनिवेद येत् ॥ गर्भिणींकपिलांदोग्ध्रींहेमधेनुंचसुव्रतां ॥ खड्गादिनाघातयित्वाद्विगुणंव्रतमाचरेत् ॥ पादमेकंचरेद्रोधेद्वौपादौबंध नेचरेत् ॥ योजनेपादहीनंस्याच्चरेत्सर्वंनिपातने ॥ पाषाणैर्लकुडैर्वापिशस्त्रेणान्येनवाबलात् ॥ निपातयतियोगास्तुकृत्स्नं कुर्याद्व्रतंहिसः ॥ अपालनात्तृणेष्वेवगौश्चरंतीकथंचन ॥ जलौघपल्वलमग्नामेघविद्युद्धतापिवा ॥ श्वभ्राद्वापतिताकस्माछ्वान द्वैर्वापिभक्षिता ॥ प्राजापत्यंचरेत्कृच्छ्रंगोस्वामीव्रतमुत्तमं ॥ शृंगभंगेऽस्थिभंगेवाचर्मनिर्मोचनेथवा ॥ प्राजापत्येनशुद्धिःस्या त्स्वस्थासायदिवाभवेद् ॥ व्रणमुत्पादनंयेनकुर्यात्सव्रणरोहणं ॥ मृत्युर्भवतिचेत्तेनगोहत्यातस्यपुष्कला ॥ अतिदोहातिवहा भ्यांनासिकाभेदनेनवा ॥ नदीपर्वतसंरोधमृतेपादोनमाचरेत् ॥ अस्थिभंगंगवांकृत्वाकटिभंगंतथैवच ॥ यदिजीवतिष ण्मासंप्रायश्चित्तंनविद्यते ॥ एतदेवव्रतंकुर्युरुपपातकिनोद्विजाः ॥ अवकीर्णविशुध्यर्थंचांद्रायणमथापिवा ॥ एतच्चांद्राय णंत्वकामकृतंज्ञेयं ॥ कामकृतेतु ॥ दद्यात्त्रिरात्रंवोपोष्यवृषभैकादशास्तुगाः ॥ उपपातकशुद्धिःस्यादेवंचांद्रायणेनवा ॥ इत्युपपातकप्रायश्चित्तं ॥ क्षत्रियस्यवधंकृत्वाषडब्दंव्रतमाचरेत् ॥ अब्दत्रयंचरेद्वैश्येशूद्रवधेचरेत् ॥ अंत्यजानांवधंकृ

त्वाह्यब्दमेकंव्रतंचरेत् ॥ अप्रदुष्टांस्त्रियंहत्वाशूद्रहत्याव्रतंचरेत् ॥ हस्तिनंतुरगंछागंमहिष्युष्ट्रकपींस्तथा ॥ मृगंचरोहिणंह-
त्वाचरेच्चांद्रायणंव्रतं ॥ अजादिकंखरंश्वानंसृगालंसूतकंतथा ॥ मार्जारंशशकंहत्वाप्राजापत्येनशुध्यति ॥ कपोतकबकानां
चगृध्राणांमूषकस्यच ॥ वधेत्वेषांप्राणिनांचपादकृच्छ्रंसमाचरेत् ॥ अनस्थीन्प्राणिनोहत्वाप्राणायामेनशुध्यति ॥ अरछ्या
न्नवितवधेविप्रःकिंचिद्दद्याद्विशुत्थमे ॥ सावित्रीपतितायस्यदशवर्षाणिपंचच ॥ सशिरंवपनंकृत्वाव्रतंकुर्यात्समाहितः ॥
एकविंशतिरात्रंचापिवेत्प्रसृतियावकं ॥ भोजयेच्चहविष्यान्नंब्राह्मणान्सप्तपंचच ॥ ततोयावकशुद्धस्यतस्योपनयनंस्मृतं ॥
एतदुपनयस्यपरमकालात्पूर्वंपरमकालेज्ञेयं ॥ अतउर्ध्वंव्रात्यस्तोमाद्दतेकृतेतिवचनात् ॥ गजाश्वरथादिहरणेमणीनांरजतस्यच ॥
धनापहरणेचैवकुर्यात्सांवत्सरंव्रतं ॥ धान्यान्नधनचौर्याणिकृत्वाकामाद्द्विजोत्तमः ॥ स्वजातीयगृहेष्वेवकृच्छ्राब्देनविशुध्यति ॥
मनुष्याणांचहरणेरत्नानांचतथैवच ॥ कूपववापीजलानांचशुद्धिश्चांद्राचणेनच ॥ धान्यान्नहरणेकृच्छ्रंतिलानामेदवंस्मृतं ॥
सर्वेषांधातुजातीनांपराकंहरणेचरेत् ॥ दशगद्याणकादूर्ध्वंद्विगुणादिव्रतंचरेत् ॥ आसहास्तुत्रिगुणमर्धहेमाविधिस्मृतं ॥
विजयेयद्व्रतंप्रोक्तंहरणेद्विगुणंहितत् ॥ हरणादशगुणंदत्वाप्रायश्चित्तंसमाचरेत् ॥ अजाभिपट्टकार्पासताम्रधान्यतिलादिषु ॥
चतुर्गुणमृणंदत्वाप्राजापत्यंसमाचरेत् ॥ कांस्यसीसादिधातूनांद्विगुणंस्तेयमोक्षणं ॥ प्राजापत्यार्धभागश्चप्रायश्चित्तंविशोधनं ॥
गोहर्तुःसप्तकृच्छ्रःस्याद्दर्द्धंहस्त्यश्वहारके ॥ चतुर्गुणमृणंदत्वाशंखस्यैकादशोत्तरं ॥ भक्ष्यभोज्याधिहरणेयानशय्यासनेषुच ॥
पुष्पेमूलफलानांचकृच्छ्रंसांतपनंचरेत् ॥ यस्ययस्यतुवर्णस्यवृत्तछेदंसमाचरेत् ॥ तस्यतस्यवधेप्रोक्तंब्राह्मणानुमतंचरेत् ॥

॥ कालेत्वाधायकर्माणिसभ्यक्कुर्याद्विधानतः ॥ तदाकुर्वंस्त्रिरात्रेणमासिमासिविशुध्यति ॥ अनाहिताग्नौपित्राद्यौयक्ष्यमाणःसुतोयदि ॥ सहित्रासेनपशुनायजेत्तानिक्रियायतु ॥ सुरालवणमद्यानांकृत्वाक्षीरस्यविक्रयं ॥ लाक्षायाश्चैवमांसस्यतिलानांचघृतस्यच ॥ विक्रेताप्राणिनांचैवकुर्यात्कृच्छ्रंमहाव्रतं ॥ तैलमध्वादिसोमानांचरेच्चांद्रायणंव्रतं ॥ दध्नश्चेक्षुरसस्यैवगुडखंडादिविक्रये ॥ सर्वेषांस्नेहपक्वानांप्राजापत्यंसमाचरेत् ॥ भक्ष्यान्नानांचसर्वेषांप्राजापत्यं० ॥ उपवासंतुतक्रस्यनत्कंकांजिकविक्रये ॥ हेमरौप्यादिलोहानांकार्पासस्यांबरस्यच ॥ विक्रयेचित्रवस्त्राणांप्राजापत्यंस० ॥ पुगीफलंमातुलिंगंद्राक्षांखर्जुरमेवच ॥ एतेषांपादकृच्छ्रंस्याद्धान्यादीनांचविक्रये ॥ कस्तुरिकादिगंधादिविक्रयेकृच्छ्रमाचरेत् ॥ नीलींविक्रीणियाद्यस्तुह्यादिदेशव्रतंचरेत् ॥ खरश्वाश्वतरीणांचगजानामेवंस्मृतं ॥ गोविक्रयंद्विजःकृत्वाप्राजाप० ॥ चांद्रायणंप्रकुर्वीतएकाहाद्देवविक्रये ॥ सर्वेषामेवविद्यानांपादकृच्छ्रं० ॥ रत्नानांविक्रयेकृच्छ्रंहिंग्वादीनांतथैवच ॥ अन्येषांचैवसर्वेषांपादकृच्छ्रंस० ॥ कामतःपरिविन्नेतुचरेदब्दत्रयंद्विजः ॥ समाप्तेब्देतुकन्यांतांज्येष्ठायचोपपादयेत् ॥ अज्ञात्वापरिवेदेचकृच्छ्रमेकंद्वयोःस्मृतं ॥ अतिकृच्छ्रंचरेद्दाताहोताचांद्रायणंचरेत् ॥ अथागम्यागमनं ॥ रेतःसिक्त्वाकुमारीषुस्वयोनिष्वंत्यजासुच ॥ ॥ सपिंडापत्यदारेषुप्राणत्यागोविधीयते ॥ व्रतस्थांविधवांगत्वाज्ञात्वाअब्दंसमाचरेत् ॥ गुरोर्दुहितरंगत्वातथैवमुनयोब्रुवन् ॥ चांडालींपतितांम्लेच्छींस्नुषांचभगिनींसखीं ॥ मातापित्रोस्वसारंचनिक्षितांशरणागतां ॥ मातुलानींप्रव्रजितांसगोत्रांनृपयोषितं ॥ सखिभार्यांगुरोर्भार्यांभ्रातृभार्यांतथैवच ॥ पितृव्यपत्नींतनयांधात्रींचैवागतस्यच ॥ आसांगत्वाद्विजो

मोहात्षडब्दंव्रतमाचरेत् ॥ कामतश्चेत्सकृद्गत्वाद्वादशाब्दंव्रतमाचरेत् ॥ द्वितीयेद्विगुणंप्रोक्तंतृतीयेत्रिगुणंस्मृतं ॥ ज्ञात्वातु-
कामतःकृत्वाह्यात्ममेढ्रंनिकृंतयेत् ॥ अभ्यासात्कामतोगत्वानिष्कृतिर्नविधीयते ॥ चांडालांत्यस्त्रियोगत्वाभुक्त्वाचप्रतिगृह्यच ॥
॥ पतत्यज्ञानतोविप्रोज्ञानात्साम्यंतुगच्छति ॥ रजकश्चर्मकारश्चनटोबुरुडएवच ॥ कैवर्तमेदभिल्लाश्चह्यंत्यजाःसप्तकीर्तिताः ॥
॥ रजस्वलांद्विजोगत्वाह्यर्द्धकृच्छ्रंसमाचरेत् ॥ कंदर्पकामतोविप्रःपादकृच्छ्रंसमाचरेत् ॥ दिवाभिगमनेविप्रःस्नात्वातूपवसेद्दि
नं ॥ अहोरात्रंतुषष्ठ्यादौप्राजापत्यंतुपर्वणि ॥ शूद्राभिगमनेविप्रःप्राजापत्यंस० ॥ गर्भपातंसकृत्कृत्वाशूद्रहत्याव्रतंचरेत् ॥
॥ शूद्रींशयनमारोप्यब्राह्मणोयात्यधोगतिं ॥ तस्यांचैवप्रसूतस्यनिष्कृतिर्नैवविद्यते ॥ अभ्यासेवगुणावृत्तिर्मासादर्वाग्वि-
धीयते ॥ ततोमासगुणावृत्तिर्यावत्संवत्सरोभवेत् ॥ ततःसंवत्सरगुणायावत्पापंसमाचरेत् ॥ तावत्कृच्छ्रंप्रकुर्वीतषडब्दंका
मतश्चरेत् ॥ ब्राह्मणींकामतोगच्छेत्क्षत्रियोवैश्यजामपि ॥ गोमूत्रपाचकेमासादत्तांर्धाचविशुध्यति ॥ विप्राशूद्रेणसंपृक्तानचैत
स्मात्प्रसूयते ॥ प्रायश्चित्तंस्मृतंतस्याःषडब्दंव्रतमुत्तमं ॥ क्षत्राःशूद्रेचसंपृक्तेचरेच्चांद्रायणत्रयं ॥ चांद्रायणंच
रेत्कृच्छ्रंचरेद्वैश्याश्च ।गमे ॥ शूद्रंगत्वाचरेद्वैश्याकृच्छ्रंचांद्रायणंचरेत् ॥ अनुलोम्येनकुर्वीतकृच्छ्रपादंचरोपितं ॥
॥ बलाद्यदिगृहीत्वाचेन्मैथुनंपापकर्मभिः ॥ सकृत्कृतेसंतपनेसतुप्रस्रवणेशुचिः ॥ कामतःशूद्रसंपर्केह्यंत्यजै
र्वातथैवच ॥ प्रविशेत्संप्रदीप्तेग्नौमृत्युनाचविशुध्यति ॥ यत्पुंसःपरदारेषुसमानेपुव्रतंचरेत् ॥ व्यभिचा
राच्चभर्तुःस्त्रीतदशेषंसमापयेत् ॥ कथंचित्ब्राह्मणींगच्छेत्क्षत्रियोवैश्यएवच ॥ चतुरब्दंषडब्दंचप्रायश्चित्तंविधीयते ॥

शूद्रस्तुब्राह्मणींगच्छेत्कथंचित्काममोहितः ॥ द्वादशाब्दव्रतेनैवतस्यशुद्धिस्तुनान्यथा ॥ कामतोब्राह्मणींगच्छेछूद्रोवाप्यंस-
जोपिवा ॥ प्रविशेत्संप्रदीप्तेग्नौमृत्युनात्रविशुध्यति ॥ अथनानाविधप्रायश्चित्तं ॥ अग्निहोत्रापविद्धाग्निर्ब्राह्मणःकामकामतः ॥
चांद्रायणंचरेन्मासंबालहत्यासमंहितत् ॥ यावंसब्दान्यतीतानिनिरग्निस्तुद्विजजन्मनः ॥ तावत्कृच्छ्रंचरेत्धोमंविप्रेसर्वंसमापयेत् ॥
गोष्ठेवसन्ब्रह्मचारीमासमेकंपयोव्रती ॥ गायत्रीज्याप्यनिनिरतोमुच्यतेसत्प्रतिग्रहात् ॥ कृच्छ्रत्रयंचरेद्व्रात्ययोयाजकोपिचरन्नपि ॥
प्लाव्यवेदंजीवमानस्त्यक्त्वाचशरणागतं ॥ गुरुंहुंकृत्यतुंकृत्यविप्रंनिर्जित्यवादतः ॥ बाध्वावाचासमाक्षिप्तंप्रसाद्योपवसेद्दिनं ॥
प्राणायामंजलेकृत्वाखरयानोष्ट्रयानगः ॥ नग्नस्नात्वाचभुक्त्वाचगत्वाचैवादिवास्त्रियं ॥ पतिताद्द्रव्यमादत्तेभुंक्तेचाब्राह्मणोयदि ॥
कृत्वातस्यसमुत्सर्गमतिकृच्छ्रंविशोधनं ॥ विप्रदंडोद्यमेकृच्छ्रःमतिकृच्छ्रंनिपातने ॥ कृच्छ्रातिकृच्छ्रशक्यांचकृच्छ्रमांतरशोणिते ॥
पथिचांडालकंदृष्ट्वाकुर्यात्सूर्यावलोकनं ॥ यदिसंभाषणंचैवगायत्रींतुसकृज्जपेत् ॥ द्विजश्चांडालभांडस्थंसलिलंपिबतेयदि ॥
षण्मासंतुचरेत्कृच्छ्रमब्दमन्नस्यभक्षणे ॥ अज्ञानात्ब्राह्मणोभुंक्तेशूद्रस्यान्नमनातुरः ॥ तस्यपापविशुध्यर्थंप्राजापत्यत्रयंचरेत् ॥
ज्ञानाचेत्ब्राह्मणोभुंक्तेषण्मासंव्रतमाचरेत् ॥ शूद्रहस्तेनयोश्नीयात्पानीयंवापिबेत्क्वाचित् ॥ अहोरात्रोषितोभूत्वापंचगव्येनशु-
ध्यति ॥ महापापोपपापाभ्यांयोभिशंसेन्मृषापरं ॥ अभक्षाभक्षमासीतसजापिनियतेंद्रियः ॥ ब्राह्मणस्यव्रणद्वारपूयशोणितसंभवे ॥
क्रिमिरुत्पद्यतेयेनप्रायश्चित्तंकथंभवेत् ॥ गवांमूत्रपुरीषेणदधिक्षीरेणसर्पिषाः ॥ त्र्यहंस्नात्वोपवासेनस्वर्णदानेनशुध्यति ॥
स्त्रियाःक्षीरंसकृत्पीत्वाकथंचिद्यदिमोहितः ॥ पुनःसंकृत्सचात्मानंप्राजापत्यंचरेत्ततः ॥ ब्रह्मचारीतुयोश्नीयान्मधुमांसंकदाचन ॥

प्राजापत्यंचरेत्कृ[illegible]होमैनशुध्यति ॥ सूर्योदयेतुयःशेतेतथाचास्तंगतेरवौ ॥ ब्रह्मस्तेनांबुभावेतुह्यहोरात्रोषितःशुचिः ॥
मिथ्याभिशंसिने[illegible]द्विःस[illegible]वादिनः ॥ मिथ्याभिशस्तेदोषंचसमादत्तेमृषावदन् ॥ क्रोधाडुन्मादमर्म्यत्वंभार्यायांतुनरःकचि
प्राजापत्यंचरेत्कृ[illegible]स्यपापविशुद्धये ॥ विप्रस्योक्त्यामृषाभाषंकृत्वातुशपथंमृषा ॥ ब्राह्मणोयावकानत्रिंचांद्रायणंचरेत् ॥
भिक्षापात्रंगृ[illegible]मंत्रमुदीरयत् ॥ प्रतिग्राह्येषुसर्वेषुषष्ठांशंचप्रकल्पयेत् ॥ चांद्रायेणनशुध्यंतिसर्वेयेचप्रतिग्रहाः ॥
कृत्वातस्यस[illegible]कृच्छ्रोविशोधनं ॥ कृष्णाजिनंचशय्यांचगजमश्वंरथंतथा ॥ लवणंद्विमुखींधेनुंगृहीत्वाब्यद्धमाचरेत् ॥
ब्राह्मणोहा[illegible]कुर्यादौर्ध्वदेहिकं ॥ कामाल्लोभात्तथामोहात्कृत्वातज्जातितांव्रजेत् ॥ परेषांसवर्णानांहीनेषुतद्द्वैगुणात्रैगुण्याद्ध्यंतं॥
व्रात्यानांया[illegible]परेषामंसकर्मच ॥ अभिचारविहीनंचत्रिभिःकृच्छ्रैर्विशुध्यति ॥ * * * वेदत्रयावयोद्विजः ॥ वत्स
रंयावकाहारस्तस्यपापविशोधनं ॥ कन्याद्वेषीतुसोमस्याद्विक्रयीनास्तिकस्तथा ॥ मिथ्याशंसीकृतघ्नश्चगुरोःप्रत्युपकारकः ॥
मातापितृसु[illegible]त्यागीभार्यात्यागीतथैवच ॥ असच्छास्त्राभिगामीचतडागारामविक्रयी ॥ अयाज्ययाजकश्चैवकितवःकूटसाक्षकः ॥
तेचह्यात्मविशुध्यर्थंचरेयुर्वत्सरत्रयं ॥ छत्राकंविड्वराहंचलशुनंग्रामकुक्कुटं ॥ पलांडुंगृंजरंचैवमोहाज्जग्ध्वापतेद्द्विजः ॥ अमत्यै
तानिषट्जग्ध्वाकृच्छ्रंसांतपनंचरेत् ॥ चांद्रायणंयतीनांचशेषेषूपवसेद्दथ ॥ संसर्गस्पृष्टंयच्चान्नंक्रियादुष्टमकामतः ॥ भुक्त्वास्व
भावदुष्टंचतप्तकृच्छ्रंसमाचरेत् ॥ मासिकंफाणितंशाकंगोरसंलवणंघृतं ॥ हस्तदत्तानिभुक्त्वातुभोक्तासांतपनंचरेत् ॥ अतिथौ
तिष्ठतिद्वारेह्यदत्त्वाश्नातियोद्विजः ॥ रुधिरंतद्भवेदन्नंभुक्त्वाचांद्रायणंचरेत् ॥ सूतिकाद्यैस्तुयद्भांडंस्पृष्टंतात्स्पृष्टिनाथवा ॥

तत्स्थंभुक्त्वाद्विजोमोहात्त्रिरात्रेणैवशुध्यति ॥ चांडालपतितोदक्यावाक्यंश्रुत्वाद्विजोत्तमः ॥ भुंजीरन्वापिबयुर्वादिनमेकमभोजनं ॥ यद्वाभोजनकालेतुह्यशुचिःस्पृशतिद्विजं॥ अशित्वासर्वमेवान्नंत्रिरात्रेणैवशुध्यति ॥ अनाचांतःपिबेद्यस्तुभक्षयेद्यदिकिंचन॥ आपोशानमकृत्वातुततश्चांद्रायणंचरेत् ॥ शूद्रवेश्मनियोभुंक्तेपानीयंवापिबेत्कचित् ॥ अहोरात्रोषितोभुक्त्वापंचगव्येनशुध्याति ॥ घृतहीनंतुयोभुंक्तेनरस्त्वाहुतिपंचकं ॥ पश्चात्घृतेनयोभुंक्तेद्विजश्चांद्रायणंचरेत् ॥ सुरासंस्पृष्टभांडेतुरेतोविण्मूत्रदूपिते ॥ जलक्षीरादिवापीतेतप्तकृच्छ्रंसमाचरेत् ॥ विण्मूत्राद्युपघातास्तुआपःप्राश्यद्विजोत्तमः ॥ तस्यशुद्धिस्त्रिरात्रेणपुनःसंस्कारमर्हति ॥ अंत्यजैःखातिताःकूपास्तडागानितथैवच ॥ तत्रस्नात्वाचपीत्वाचप्राजापत्यंसमाचरेत् ॥ स्पृष्ट्वादृष्ट्वाचमदिरांविधिवत्प्रतिगृह्यच ॥ शूद्रोच्छिष्टांचयःपीत्वाकुशवारिंपिबेत्त्र्यहं ॥ अभोज्यान्नंद्विजोभुक्त्वात्रिरात्रेणैवशुध्यति ॥ मत्याभुक्त्वाचरेत्कृच्छ्रंरेतोविण्मूत्रमेवच ॥ निराचारस्यविप्रस्यनिषिद्धाचरणस्यच ॥ अन्नंभुक्त्वाद्विजःकुर्यात्प्राजापत्यचतुष्टयं ॥ महापातकिनस्त्वन्नंकृतघ्नस्यतथैवच ॥ अतिकृच्छ्रःसकृद्भुक्त्वामत्याचांद्रायणंचरेत् ॥ आरूढपतितान्नंचसगोत्राभर्तुरेवच ॥ पाखंडानाश्रितानांचयतेश्चैवतथैवच ॥ जातिभ्रंशादिकंपापंकृत्वान्यतरदिच्छया ॥ चरेत्सांतपनंकृच्छ्रंप्राजापत्यमनिच्छया ॥ पादेनब्राह्मणंहत्वाप्रायश्चित्तविधिच्छया ॥ त्रिरात्रोपोषितःस्नात्वाप्रणिपत्यप्रसादयेत् ॥ नीलीरक्तंयदावस्त्रंब्राह्मणोंगेषुधारयेत् ॥ अहोरात्रोपितोभूत्वापंचगव्येनशुध्यति ॥ रोमकूपेयदागच्छेद्रसोनील्यास्तुकस्यचित् ॥ त्रिवर्णेषुचसामान्यंतप्तकृच्छ्रंविशोधनं ॥ नीलीदारुयदाभित्वाब्राह्मणस्यशरीरतः ॥ शोणितंदृश्यतेतत्रचरेच्चांद्रायणद्वयं ॥ नीलीमध्येयदागच्छेत्प्रमादाद्ब्राह्मणःकचित् ॥ त्रिरात्रोपोषितोभूत्वापंचगव्येनशुध्यति ॥

अपांक्तेयश्चयःकश्चित्पंक्तौभुंक्तेद्विजोत्तमः ॥ विनायज्ञोपवीतेनभुक्त्वादिनमभोजनं ॥ अनापदिचरेद्यस्तुसिद्धाभिक्षांगृहेवसन्॥
प्राजापत्येनशुध्येतह्यापत्कालेऽन्यहंद्विजः ॥ नपंक्तौविषमंदद्याद्यचितंचेन्नदापयेत् ॥ प्राजापत्येनकृछ्रेणमुच्यतेकर्मणस्तथा ॥
नदीतरणकर्तुश्चकन्याविघ्नकरस्यच ॥ समेविषमकर्तुश्चनिष्कृतिर्नैवविद्यते ॥ होमकालेतथादोहेस्वाध्यायेदारसंग्रहे ॥ अंत
रेणयदागच्छेद्विजश्चांद्रायणंचरेत् ॥ कन्यान्नधनलाभानांबुध्याविघ्नंसमाचरेत् ॥ प्रत्येकंप्राकृतंकुर्यात्ब्रह्मचर्यंतुवार्षिकं ॥
वेतनंकारायित्वातुयःपठेत्पाठयेद्विजः ॥ द्विजश्चांद्रायणंकुर्यात्ततःपापात्प्रमुच्यते ॥ अनिवर्त्यमहायज्ञान्योभुंक्तेप्रत्यहंगृही ॥
अनातुरोशितियत्वर्षत्र्यब्देनशुध्यति ॥ ब्रह्मचारीशुनादष्टस्त्र्यहंसायंपयःपिबेत् ॥ गृहस्थश्चेद्विरात्रंतुचैकाहंयोग्निहोत्रवान् ॥
नाभेरूर्ध्वंतुदष्टस्यतदेवाद्विगुणंचरेत् ॥ स्यादेतत्त्रिगुणंवक्रेमस्तकेचचतुर्गुणं ॥ रजस्वलायदिस्पृष्टाश्वानजंबुकरासभैः ॥ पंचरात्र
निराहारात्पंचगव्येनशुध्यति ॥ प्रेतस्यप्रेतकार्याणिह्यकृत्वाधनहारितः ॥ वर्णानांयद्वधेप्रोक्तंतदर्धंप्रयतश्चरेत् ॥ बलाद्दा
सीकृतायेनम्लेंछचांडालतस्करैः ॥ अशुभंकारितंयेनगवादिप्राणिहिंसनं ॥ उच्छिष्टमार्जनंचैवतथातस्यैवभोजनं ॥ खरोष्ट्रा
विड्वराहाणांमाहिषस्यचभक्षणं ॥ तत्स्त्रीणांचतथासंगताभिश्चसहभोजनं ॥ मासोषितोद्विजातौहिप्राजापत्यांविशोधनं ॥
चांद्रायणंपराकंचचरेत्संवत्सरोषितः ॥ उर्ध्वंसंवत्सराकल्पंप्रायाश्चितंद्विजोत्तमैः ॥ संवत्सरैस्त्रिभिश्चैवसद्भावंसनिगच्छ
ति ॥ चांडालेनचसंस्पृष्टंकांस्यभांडादिकंचयत् ॥ तस्मिन्भुक्तेचरेत्कृछ्रंजलपानेतुकृछ्रकं ॥ चांडालपतितानांचासंचारेसमु
पस्थिते ॥ अहोरात्रंत्रिरात्रंस्यात्त्रिरात्रेणैवत्वहःस्मृतं ॥ याम्यंघटमपांपूर्णंपर्यस्येत्प्रेतवद्बहिरित्यादि ॥ इत्युपपातकं ॥

अथकृच्छ्रचांद्रायणादिलक्षणं ॥ तत्रव्रतांगभूतायमनियमाउच्यंते ॥ ब्रह्मचर्यंदयाक्षांतिर्दानंसत्यमलौल्यता ॥ एकभुक्तेननक्तेनतथैवायाचितेनच ॥ उपवासेनचैकेनपादकृच्छ्रउदाहृतः ॥ यथाकथंचित्रिगुणःप्राजापत्योयमुच्यते ॥ ॥ अयमेवाथकृच्छ्रस्यपाणिपूरान्नभोजनात् ॥ प्रातस्तुद्वादशग्रासाःसायंपंचदशैवतु ॥ अयाचितौद्वौचाष्टौवापादंनिरशनं-स्मृतं ॥ सायंद्वाविंशतिर्ग्रासाःप्रातःषड्विंशतिस्तथा ॥ अयाचिताःषोडशाष्टावशक्तस्यउदाहृताः ॥ कुक्कुटांडप्रमाणंतुमयूरांडप्रमाणतः ॥ ग्रासप्रमाणंविज्ञेयंयथावासांविशेन्मुखे ॥ सायंप्रातस्तथैवैकंदिनद्वयमयाचितं ॥ दिनंदिनंप्रतिदिनंपराकः परिकीर्त्तितः ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकं ॥ प्राश्यापरेतूपवसेत्कृच्छ्रंसांतपनंस्मृतं ॥ एकैकंप्रत्यहंपीत्वात्युपवासस्ततःपरं ॥ सप्तसप्तेनतुकृच्छ्रोयंमहासांतपनःस्मृतः ॥ अथगोमूत्रादिप्रमाणंब्रह्मकूर्चोक्तंज्ञेयं ॥ पिण्याकमात्मतक्रांबुसक्तूनांप्रतिवासरं ॥ एकरात्रोपवासश्चमहाकृच्छ्रोयमुच्यते ॥ एषांत्रिरात्रमभ्यासादेकैकस्ययथाक्रमं ॥ तुलापुरुषइत्येवंज्ञेयःपं-चदशात्मकः ॥ एतद्द्वयंचनाश्नीयात्कृच्छ्रार्द्धंतद्विधीयते ॥ एकैकंवासमश्नीयादहानित्रीणिपूर्ववत् ॥ अहंश्चोपवसेदंत्यमातिकृच्छ्रःप्रकीर्त्तितः ॥ अहमुष्णंपिबेदापरंहमुष्णंघृतंपिबेत् ॥ अहमुष्णंपयःपीत्वावायुभक्षंदिनत्रयं ॥ अयंतप्तकृच्छ्रःशक्तविषयः ॥ ॥ तप्तक्षीरघृतांबूनामेकैकंप्रत्यहंपिबेत् ॥ त्र्यहंचोपवसेच्चांतंतप्तकृच्छ्रंसमाचरेत् ॥ क्षीरंतुद्विपलंतत्रघृतमेकपलंस्मृतं ॥ जलंतुत्रिपलंग्राह्यंपरिमाणंप्रकीर्त्तितं ॥ कृच्छ्रातिकृच्छ्रःपयसादिवसानेकविंशतिं ॥ द्वादशाहोपवासेनपराकःपरिकीर्तितः ॥ ॥ कृच्छ्रःपंचदशान्हिकः ॥ गोक्षीरंसप्तरात्रंतुपिबेत्स्तनचतुष्टयं ॥ स्तनत्रयंसप्तरात्रंसप्तरात्रंस्तनद्वयं ॥ स्तनेनैकेनषड्रात्रंत्रि

रात्रंचान्नभुग्भवेत् ॥ एतत्सौम्यायनन्नामव्रतंकल्मषनाशनं ॥ स्वर्णोदुंबरराजीवबिल्वपत्रकुशोदकैः ॥ प्रत्येकंप्रत्यहंपीत्वा पर्णकृछ्रउदाहृतः ॥ एतान्येवसमस्तानित्रिरात्रोपोषितःशुचिः ॥ क्वाथयित्वापिबेदद्भिःपर्णकृछ्रोविधीयते ॥ पत्रैस्तुयःप रंकृछ्रंपुष्पैस्तत्कृछ्रउच्यते ॥ फलैर्मासेनकथितःफलकृछ्रोमनीषिभिः ॥ श्रीकृष्णःश्रीफलैःप्रोक्तोमासेनाम्रफलैस्तथा ॥ ॥ मूत्रकृछ्रःस्मृतोमूत्रैःस्तोयकृछ्रोजलेनतु ॥ तिथिवृध्याचरेत्पिंडान्शुक्लेशिख्यंडसंमितान् ॥ एकैकंह्रासयेत्कृष्णेपिंडंचांद्रा यणंचरेत् ॥ हविष्यान्नंसमश्नीयाद्गायत्र्याचाभिमंत्रितं ॥ अमावास्यांनभुंजीतअपस्त्रिषवणंस्पृशेत् ॥ वर्द्धमानेतथासोमेग्रा- संवर्धतिवैसदा ॥ हीयमानेचहीयंतेएतच्चांद्राय० ॥ अष्टवाथसमश्नीयात्पिंडान्मध्यंदिनेदिने ॥ नियतोथहविष्यस्ययति- चांद्रायणंस्मृतं ॥ चतुर्ग्रासान्समश्नीयान्नियतात्माद्दढव्रतः ॥ हविष्यंचैकमासंचऋषिचांद्रायणंस्मृतं ॥ यथाकथंचित्पिंडानां चत्वारिंशच्चतद्वयं ॥ मासेनैवोपभूंजीतचांद्रायणमथापरं ॥ अनादिष्टेषुपापेषुशुद्धिश्चांद्रायणंस्मृतं ॥ धर्मार्थंयश्चरेदेतत्चंद्रस्यैति- सलोकतां ॥ अथप्रत्याम्नायः ॥ जन्मप्रभृतिपापानिकृतानिसुबहून्यपि ॥ षडब्देनैवशुध्यंतिमहतःपातकादृते ॥ प्रत्या- म्नायागवांदेयमशीतिर्धानिभिःशतं ॥ दशलक्षाणिगायत्र्यास्तथाष्टौव्रतमाचरेत् ॥ प्राणायामसहस्राणिद्वादशत्रिगुणानिच ॥ ॥ एवंनरविशेषेणप्रायश्चित्तंसमाचरेत् ॥ तिलहोमस्यलक्षंतुसहस्राण्यप्यशीतिच ॥ प्रत्याम्नायसमागावोदाक्षिणाहितथैवच ॥ प्राजापत्येह्यशक्तस्तुगांदद्याच्छुभलक्षणां ॥ तदभावेतुनिष्कंस्यात्तर्धंपादमेवच ॥ विप्राभोज्याद्वादशैवउपवासास्तथैवच ॥ पारायणंसंहितायाःसमान्याहुर्मनीषिणः ॥ उपवासस्तुगायत्र्याःसहस्रंविप्रभोजनं ॥ प्राणायामशतंद्वौचसमेमतच्चतुष्टयं ॥

अतिकृच्छ्रःपराकश्चतप्तकृच्छ्रस्तथैवच ॥ प्राजापत्यत्रयंचैवसममेतच्चतुष्टयं ॥ चांद्रायणचरंकृच्छ्रात्गायत्र्याह्ययुतत्रयं ॥ गादा नानितथात्रीणिसममेतच्चतुष्टयं ॥ पुण्यतीर्थेचार्द्रशिराःस्नानंद्वादशसंख्यया ॥ द्वियोजनंतीर्थयात्राप्राजापत्यसमंस्मृतं ॥ गायत्र्याःकोटिजप्तेनब्रह्महत्याव्यपोहति ॥ लक्षाशीतिंजपेद्यस्तुसुरापानात्प्रमुच्यते ॥ पुनातिहोमकर्तारंगायत्र्यालक्षसप्तति ॥ गायत्र्यापष्ठिभिर्लक्षैःपुनातिगुरुतल्पगं ॥ मंडलंपावमानंचजपेन्निसंहविप्यभुक् ॥ मासमेकंतुनक्ताशीशुद्धिर्ब्रह्मवधादृते ॥ इंद्रमिंद्रमिदंसूक्तंमधुछंदेंद्रमेवच ॥ सुरापानात्प्रमुच्येतमासमेकंतुयोजपेत् ॥ षण्मासंवत्सरंवापिनियतोनियताशनः ॥ जप्त्वा तुपौरुषंसूक्तंमुच्यतेसर्वपातकैः ॥ नारायणंजपेद्यस्तुरुद्रैकादशिकांतथा ॥ महापातकयुक्तोपिमुच्यतेनात्रसंशयः ॥ प्राणा यामशतंकार्यंसर्वपापात्प्रमुच्यते ॥ उपपातकजातंतुत्वनादिष्टस्यचैवहि ॥ महाव्याहृतिहोमस्तुतिलैःकार्योद्विजत्मना ॥ उप पातकशुध्यर्थंसहस्रंपरिसंख्यया ॥ निशायांवादिवावापियदज्ञानकृतंभवेत् ॥ त्रैलोक्यसंख्याकरणात्समस्तंसंप्रणश्यति ॥ वेदाभ्यासरतंशांतंमहायज्ञक्रियापरं ॥ नस्पृशंतीहपापानिमहापातकिनंविना ॥ इतिप्रायश्चित्तप्रकरणंसमाप्तं ॥ पितापिता महोभार्याजामाताभगिनीत्रयं ॥ महालयेगयाश्राद्धेसप्तगोत्राःप्रकीर्तिताः ॥ एकविंशत्युभाभ्यांचद्वादशद्वादशैस्तथा ॥ ॥ दशाद्विदशपंचचकुलमेकोत्तरंशतं ॥ अथाद्धलक्षणं ॥ हिरण्यधान्यमन्नंचस्नानंवासागराप्सुच ॥ चतुर्विधानामेतेषामद्ध- संज्ञाप्रचक्षते ॥ सालंकृतंवागोदानंतन्मौल्यंवात्रिनिष्ककं ॥ हेमकृच्छ्रोभवेत्त्रिंशदद्धस्त्वेकउदाहृतः ॥ द्वादशाढकधान्यस्य कृच्छ्रइत्यभिधीयते ॥ त्रिंशत्कृच्छ्रास्तएवस्युःकथितोद्धोबुधैरपि ॥ द्वादशाद्विजभोज्येनकृच्छ्रस्त्वेकउदा० ॥ त्रिंशदेवहितेकृ-

छ्राह्वेकाद्धःपरिकीर्तितः ॥ समुद्रगामिनीस्नानमेककृच्छ्रस्तुएवहि ॥ कृच्छ्रास्तेत्रिंशदेकाद्धःकथ्यतेमुनिभिःसदा ॥ षड्गुणीकृत
मेकाद्धमेकैकंतुपृथक्पृथक् ॥ षडद्धामिथुनाब्रूयात्प्रायश्चित्तंचतुर्विधं ॥ साशीतिशतसंख्याकाकृच्छ्रोद्धस्यचैवहि ॥ चतु-
र्विधानामप्येवंप्रायश्चित्तंविनिर्दिशेत् ॥ एवंकर्तुमशक्तश्चेद्यथावित्तानुसारतः ॥ तीर्थानुगमनंचैवस्नानहोमजपादिना ॥
॥ अत्रापिदशदानानिकुर्यात्पापक्षयायच ॥ यथोक्तविधिनाशक्त्यावशक्तौतुस्वशक्तितः ॥ निवर्तनमिताभूमिर्द्रोणत्रय
मितास्तिलाः ॥ सुवर्णनिष्कमात्रस्यादाज्यंचैवाढकंस्मृतं ॥ सूक्ष्मवस्त्रद्वयंचैवगुडंचपलमष्टकं ॥ सार्धखारीद्वयंधान्यंव्री
हयःपरिकीर्तिताः ॥ निष्कत्रयमितंरौप्यंलवणंसार्धखारिकं ॥ प्रमाणंदशधान्यानांकीर्तयंतिमनीषिणः ॥ निवर्तनमानं
॥ बालवत्सकधेनूनांसहस्रंयत्रतिष्ठति ॥ तद्वैनिवर्तनंज्ञेयमितिशातातपोब्रवीत् ॥ साशीतिरेकाःकृच्छ्रास्युरेकाब्दःपरिकीर्ति
तः ॥ षड्गुणीकृतचाद्धस्यषडशद्धःपरिकीर्तितइत्यादि ॥ अथधान्यपरिमाणं ॥ पलद्वयंतुप्रसृतिर्द्विगुणंकुडवंस्मृतं ॥
॥ चतुर्भिःकुडवैःशूर्पप्रस्थःश्चत्वारआढकः ॥ आढकैस्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः ॥ कुंभोद्रोणद्वयःसूखारीद्रोणास्तुषोडशो
॥ अथसुवर्णपरिमाणं ॥ जालसूर्यमरीचिस्थंत्रसरेणुरजःस्मृतं ॥ तेष्टौलिक्षास्तुतास्तिस्रोराजसर्षपउच्यते ॥ गौरस्तुतेत्र
यःषट्यवमध्यस्तुतेत्रयः ॥ निष्कलःपंचतेमाषास्तेसुवर्णस्तुषोडश ॥ पलंसुवर्णाश्चात्वारःपंचवापिप्रकीर्तितं ॥ द्वौकृष्णले
रौप्यमाषोधरणंषोडशैश्चतैः ॥ शतमानंतुदशभिर्धरणैःपलमेवच ॥ निष्कःसुवर्णाश्चत्वारःकर्षकस्ताम्रकःपणः ॥ अन्यःपक्षः
यवःस्यात्सर्षपैःषड्भिर्गुंजाचस्यात्रिभिर्यवैः ॥ गुंजाभिपंःचभिश्चैकोमाषकःपरिकीर्तितः ॥ भवेत्षोडशभिर्माषैः ॥

सुवर्णस्तैःपुनःस्मृतः ॥ पलंसुवर्णाश्चत्वारःपंचवापरिकीर्त्तितः ॥ मानंतुलांगुलिप्रस्थैर्गुंजाःपंचाद्यमापकः ॥ तेषोडशस्तुकर्षोस्त्रीपलंकर्षचतुष्टयमित्यादि ॥ अथनिमेषादिनिर्णयः ॥ अक्षिपक्ष्मपरिक्षेपोनिमेषःपरिकीर्त्तितः ॥ द्वौनिमेषौत्रुटीनामद्वेत्रुटीतुलवःस्मृतः ॥ द्वौलवौक्षणइत्युक्तंकाष्ठाप्रोक्ताक्षणादश ॥ त्रिंशत्काष्ठाःकलाप्रोक्ताकलात्रिंशन्मुहूर्तकः ॥ अन्हःपंचदशप्रोक्तामुहूर्ताःपूर्वसूरिभिः ॥ रात्रावपितथाप्रोक्ताअहोरात्रमितिस्मृतं ॥ मुहूर्तत्रितयंप्रातस्तावानेवाहिसंगवः ॥ मध्यान्हस्त्रिमुहूर्तःस्यादपराण्हस्तुतादृशः ॥ सायान्हस्त्रिमुहूर्तःस्यादिसेवंकथितोबुधैः ॥ अथपिंडप्रमाणं ॥ हेमाद्रावंगिराः ॥ कपित्थबिल्वमात्रान्वापिंडान्दद्याद्विधानतः ॥ कुक्कुटांडप्रमाणान्वामलकैर्बदरैःसमाः ॥ तत्रैवधूम्रः ॥ कपित्थस्यप्रमाणेनपिंडान्दद्यात्समाहितः ॥ तत्समंविकिरंदद्यात्पिंडांतेपुषडंगुले ॥ अंगुष्ठीपर्वतौभट्टास्तु ॥ एकोद्दिष्टेसपिंडेचकपित्थंतुविधीयते ॥ नारिकेरप्रमाणंतुप्रत्यब्देमासिकेतथा ॥ तीर्थेदर्शेचसंप्राप्तेकुकुडांडप्रमाणतः ॥ महालयेगयाश्राद्धेकुर्यादामलकोपमामितिआहुः ॥ कालिकायामाचार्यः ॥ यत्रस्युर्बहवःपिंडास्तत्रबिल्वफलोपमाः ॥ यत्रचैकोभवेत्पिंडःस्तत्रखर्जूरसन्निभः ॥ प्रेतपिंडस्तुदैर्घ्येणद्वादशांगुलमुच्यतेतिवायवीये ॥ अथस्त्रीनामानि ॥ स्मृतिरत्नाकरग्रंथांतरे ॥ मार्गशीर्षेतुवाग्देवीततःपद्मावतीभवेत् ॥ श्रीदेवीचित्रसावित्रीभूकल्याणकरातथा ॥ सत्यभामापुण्यवतीरूपवत्याहमित्सापि ॥ चंद्रावतीचलक्ष्मीचस्त्रीनामकरणंक्रमात् ॥ पित्रादत्तंतुयन्नामभवेत्सांव्यवहारिकं ॥ विवाहेजन्मनामस्यान्मासनामाभिवंदने ॥ इतिस्त्रीनामानि ॥ इतिश्रीनारायणभट्टविरचितायांधर्मप्रवृत्तौनिमेषादिप्रकरणंसमाप्तं ॥ श्रीवेंकटेशार्पणमस्तु ॥ ॥ ॥

टीप—४५ व ४६ या पानांचे आंकडे जे पुढें मागें ह्मणजे ४६|४५ पडले आहेत ते सरळ वाचावे.

हें पुस्तक शहापूर येथें दत्तात्रय रामचंद्र तिळवे यांनीं आपल्या
धुंडिराज छापखान्यांत छापून प्रसिद्ध केलें.
मिति कार्तिक शुद्ध १० शके १८१२
विकृतिनामसंवत्सरे.